amiDayanandkrit Samskar...
ashramaprakaranayoradhyayanam"



Shri Vikram Kumar.

The thesis is divided into nine pters. The author has dealt with the ous aspects of our Samskaras, with cial reference to marriages and duties a grihastha. Maharshi Dayananda's mskaravidhi forms the base of the sent study. But the collection of a vast ount of material from the original urces, such as the Samhitas, the ahmanas, the Upanishads, the ihyasutras, as well as ancient Indian edical texts and Smritis render the thesis the more ineresting and useful. The resentation of the thesis through Sanskrit a lucid style would give it an all India haracter and scholors all over the country would undoubtedly welcome the hesis as a distinct contribution to our studies of samskaras which form the backbone of our cultural heritage.

DR. RAM KARAN SHARMA
DELHI

# वैदिकगृहाश्रमविधिः

## महर्षिदयानन्दप्रतिपादितविवाहसंस्कार-गृहाश्रमप्रकरणानुशीलनम्



डॉ० विक्रमकुमारः

व्याकरणाचार्यः, एम० ए० (संस्कृत, हिन्दी), पी-एच० डी०
वरिष्ठप्रवक्ता, पंजाबविश्वविद्यालयः, चण्डीगढम् ।



प्रकाशकः

डॉ० विक्रमकुमारः विवेकी
संस्कृतविभागः, पंजाबविश्वविद्यालयः, चण्डीगढम् ।

प्रमुख वितरकः
प्रतिभा प्रकाशन
29/5 शक्तिनगर,
दिल्ली–110007



जनवरी—1992
मूल्यम्–~~200~~–रुप्यकाणि
100

मुद्रकः
वेदव्रतः शास्त्री
आचार्य प्रिंटिंग प्रेस,
गोहाना मार्ग, रोहतक
दूरभाष : 72874




# मङ्गलाचरणम्

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥
अथर्व० 10.8.1

पाणिग्रहादिकान् सर्वान् संस्कारान् व्याचचक्षिरे ।
गृह्यसूत्रेषु ये प्राज्ञा आचार्यांस्तान् स्मराम्यहम् ॥

यो भारतस्याखिलमोहजालं
वेदादिसच्छास्त्रप्रचारणेन ।
चिच्छेद तं तीव्रदिवाकराभं
देवं दयानन्दमहं नमामि ॥

# नवनीतम्

सोमो वधूयुरभवदश्विनास्तामुभा वरा।
सूर्यां यत् पत्ये शंसन्तीं मनसा सवितादददात् ॥
ऋग् 10.85.9

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥
ऋग्० 10.85.36

समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥
ऋग् 10.85.47

सामाहमस्मि-ऋक् त्वं, द्यौरहं पृथिवी त्वम्।
अथर्व० 14.2.71

प्रजाभिरग्ने अमृतत्वमश्याम्। ऋग् 5.4.10




# प्रास्ताविकम्

प्राक्तनैर्महर्षिभिर्गृह्यसूत्रकारैर्मानवजीवने केचन संस्कारा आवश्यकर्त्तव्यत्वेन प्रतिपादिताः। विभिन्नगृह्यसूत्रेषु तेषां संख्या न्यूनाधिका दृश्यते। महर्षिदयानन्देन स्वप्रणीते संस्कारविधौ गर्भाधानाद्या अन्त्येष्ट्यन्ताः षोडश संस्काराः सविधिविधानमुपन्तस्ताः। "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते" इति न्यायानुसारं मनुष्येण फलान्युद्दिश्य कर्माणि क्रियन्ते। षोडशसंस्कारसम्पादनसमयेऽपि यानि विभिन्नकर्मकाण्डानि विधीयन्ते तानि दृष्ट्वा को नाम चक्षुष्मान् विवेकशीलो नैव जिज्ञासते—कुत इदम् ? कुत ईदृशम ? कुत एतावत् ? कुतो मन्त्रपाठः ? कुत आहुतयः ? इति। आप्तैर्विहितत्वाच्च न तेषां निष्प्रयोजनत्वं वक्तुं शक्यते। "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति न्यायेन गूढार्थं उपपद्यते च। कस्य कर्मणः किं प्रयोजनं इत्यादिजिज्ञासैव प्रस्तुतप्रबन्धस्य जननी।

मया केवलं विवाहगृहाश्रमविषयमाश्रित्य शोधकार्यं निरबारि। विषयस्य चास्य स्वामिदयानन्दकृतसंस्कारविधिरेव मुख्यमधिकरणम्। तस्मिन् संस्कारविधिग्रन्थे स्वामिना विवाहप्रकरणे च क्रमशो विवाहगृहाश्रमविधयो निरूपिताः, तदतिरिक्तं नैके सैद्धान्तिकविषया विचारिताः। मया प्रस्तुतप्रबन्धे विवाहसंस्कारान्तर्गतानां समस्तविधिनामभिप्रायः प्रदर्शितः। विधिप्रयुक्तानां मन्त्राणामप्यनुशीलनं विहितम्। विधीनां रहस्यं तात्पर्यं च प्रायशस्तत्र तत्र पठितेभ्यो मन्त्रेभ्य एव विस्तारितम्। विधीनां प्रामाण्यमपि च प्रतिपादितम्। यत्र क्वचिदाचार्याणां मतभेदः सोऽपि प्रदर्शितः। गृह्यसूत्राणां तुलनात्मकमध्ययनञ्च गवेषणापूर्वकं विधाय विवाहविधिषु तुलनात्मकविचारा अपि प्रदर्शिताः। विधीनां व्याख्याने मयाऽयं क्रमो रक्षितः—पूर्वं विधिनिरूपणं ततो मन्त्रार्थाः, तदुत्तरं विधेरभिप्रायः, अन्ते च तुलना। मन्त्रार्थो निघण्टुनिरुक्तव्याकरणादिप्रमाणसंवलित एव भवेदिति चेष्टितम्। सुविस्तृतोऽपि विषयः "नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते" इति न्यायेन संक्षिप्यैव निरूपितः।

स्वामिदयानन्दस्य संस्कारविधमुपजीव्योल्लेखनीयं ग्रन्थद्वयमेव साम्प्रतं यावत् प्रकाशितं, यत्र हिन्दीभाषामाध्यमेन सर्वेऽपि षोडश-

संस्कारा: संक्षेपतो व्याख्याता: । पूर्वं श्री आत्माराम अमृतसरी-पण्डित-भीमसेनयो: सहप्रयत्नेन लिखित:, पश्चात् पण्डितहरिदत्तशास्त्रिणां च द्वितीयसंस्करणे परिवर्धित: संशोधितश्च "संस्कारचन्द्रिका" नाम प्रथमो ग्रन्थ: । द्वितीयश्च "संस्कारचन्द्रिका" नाम्नैव डा० सत्यव्रत-सिद्धान्तालंकारेणैको ग्रन्थ: प्रकाशित: । मयैतद्ग्रन्थरत्नद्वयमप्यधीतम् । लेखकेभ्य: स्वप्रणतिं विज्ञापयन्नेव विनिवेदयामि यद् विवाहगृहाश्रम-विषये तत्र यदुपलभ्यते तदपेक्षया नूतनाविष्करणायैव मम प्रयास: ।

प्रबन्धप्रणयनसमाप्तौ प्राक् परेशं स्तौमि यस्य कृपाकटाक्षवशात् स्वस्थेन मया शोधकार्यमिदं समापि । तदनन्तरं प्रस्तुतप्रबन्धस्य लेखने येषां प्राचीनमहर्षीणां ग्रन्थरत्नेभ्य: साहाय्यं मया प्राप्तं तान् मौलि-मिलन्मुकुलितकरयुगल: सादरं प्रणमामि । इतरेषामपि परमादरणी-यानां विदुषां ग्रन्थेभ्यो मया यत् किञ्चदुपार्जितं तदर्थं तेऽपि कृतज्ञता-पूर्वकं स्मर्यन्ते ।

शोधकार्यमिदं पञ्जाबविश्वविद्यालयीयमहर्षिदयानन्दवैदिकानु-सन्धानविभागस्य तत्त्वावधाने तदध्यक्षाणां शेमुषीजुषां विद्वत्प्रवराणां श्रीमतां डा० रामनाथवेदालंकारमहाभागनां पथप्रदर्शने मयाऽकारि । विविधकर्मव्यापृतैरपि तै: प्रबन्धोऽयमतिकृपयाऽधीत्य संशोधित: । तदर्थं-महं स्वश्रद्धाकुसुमानि तेभ्य: समर्पयामि ।

किञ्च वेदेषु कृतभूरिपरिश्रमान्, झज्जरगुरुकुलीयस्नातकवर्यान् अग्रजकल्पान् डा० सुदर्शनदेवाचार्यान् प्रति कृतज्ञोऽस्मि यै: पुस्तक-स्यास्य नामकरणं विहितम् । व्याकरणादिवेदांगेषु प्रगाढपण्डिता: आचार्यवेदव्रतशास्त्रिणोऽपि पुस्तकप्रकाशनार्थं प्रशंसनीया:, यतस्तै: स्वल्पसमय एवेदमशुद्धिसंशोधनपूर्वकं मुद्रितम् । सतीर्थ्य: मित्रवर्य: डा० राजकुमाराचार्य: खलु ममोपकर: । अनुजकल्पेनैतेन प्रूफसंशोधनेऽहं निश्चिन्तो विहित: । मुहुर्मुहु: पत्राचारमाध्यमेनैव ममोपस्थितिं तत्र मुद्रणस्थले रोहितके कारयताऽनेन बहूपकृत: । अयुष्मै खलु स्वाभाविका: सुहृन्सम्मितशब्दोपेता धन्यवादा: ।

अन्ते मामकीनोऽप्ययमेवाभिलाषो यद्विद्वांसो मां सर्वदा सर्वथा च कृतार्थयन्त्विति ।

पंजाबविश्वविद्यालय:, चण्डीगढम् । डॉ० विक्रमकुमार: विवेकी
जनवरी, 1992

# विषयसूची




—:o:—

# संक्षेपनिर्दशिका

| | |
|---|---|
| अ० | अथर्ववेदः |
| अत्रि० | अत्रिस्मृतिः |
| अमर० | अमरकोशः |
| आ० गृ० | आश्वलायनगृह्यसूत्रम् |
| आग्नि०गृ० | आग्निवेश्यगृह्यसूत्रम् |
| आप० गृ० | आपस्तम्बगृह्यसूत्रम् |
| आप० ध० | आपस्तम्बधर्मसूत्रम् |
| आश्व०स्मृ० | आश्वलायनस्मृतिः |
| ऋ० | ऋग्वेदः |
| ऋ०भा०भू० | ऋग्वेदादिभाष्यभूमिका |
| ऐ० आ० | ऐतरेयारण्यकम् |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| का० गृ० | काठकगृह्यसूत्रम् |
| कात्या० | कात्यायनगृह्यसूत्रम् |
| का० सं० | काठकसंहिता |
| कौषी० गृ० | कौषीतकिगृह्यसूत्रम् |
| कौषी०ब्रा० | कौषीतकीब्राह्मणम् |
| कौ० सू० | कौशीकसूत्रम् |
| खा० गृ० | खादिरगृह्यसूत्रम् |
| गो० गृ० | गोभिलगृह्यसूत्रम |
| गो० ब्रा० | गोपथब्राह्मणम् |
| गौ० ध० | गौतमधर्मसूत्रम् |
| गौ० स्मृ० | गौतमस्मृतिः |
| च० सं० | चरकसंहिता |
| चा० नी० | चाणक्यनीतिः |
| जै० गृ० | जैमिनीयगृह्यसूत्रम् |
| लौ० गृ० | लौगाक्षीगृह्यसूत्रम् |
| व० ध० | वसिष्ठधर्मसूत्रम् |
| तां० ब्रा० | ताण्ड्यब्राह्मणम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० उ० | तैत्तिरीयोपनिषद् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| द० ल० सं० | दयानन्दलघुग्रंथसंग्रहः |
| द० स्मृ० | दक्षस्मृतिः |
| निघं० | निघण्टुः |
| निरु० | निरुक्तम् |
| पद्मपु० | पद्मपुराणम् |
| पा० गृ० | पारस्करगृह्यसूत्रम् |
| बृ० उ० | बृहदारण्यकोपनिषद् |
| बृ० दे० | बृहद्देवता |
| बृ० सं० | बृहत्संहिता |
| बौ० गृ० | बौधायनगृह्यसूत्रम् |
| बौ० ध० | बौधायनधर्मसूत्रम् |
| बौधा० स्मृ० | बौधायनस्मृतिः |
| भा० गृ० | भारद्वाजगृह्यसूत्रम् |
| भा० पु० | भागवतपुराणम् |
| म० भा० | महाभारतम् |
| मं० ब्रा० | मन्त्रब्राह्मणम् |
| मा० गृ० | मानवगृह्यसूत्रम् |
| मुण्ड० उ० | मुण्डकोपनिषद् |
| मै० सं० | मैत्रायणीसंहिता |
| य० | यजुर्वेदः |
| या० स्मृ० | याज्ञवल्क्यस्मृतिः |
| शां० गृ० | शांखायनगृह्यसूत्रम् |
| स० प्र० | सत्यार्थप्रकाश |

| | | | |
|---|---|---|---|
| व० स्मृ० | वसिष्ठस्मृतिः | सं० दी० | संस्कार दीपक |
| वा० गृ० | वाराहगृह्यसूत्रम् | सं० र० | संस्काररत्नमाला |
| वि० ध० | विष्णुधर्मसूत्रम् | सं० वि० | संस्कारविधिः |
| वि० स्मृ० | विष्णुस्मृतिः | साम० | सामवेदः |
| वी० मि० | वीरमित्रोदयः | सु० | सुश्रुतसंहिता |
| वै० गृ० | वैखानसगृह्यसूत्रम् | स्मृ० चं० | स्मृतिचंद्रिका |
| व्या० स्मृ० | व्यासस्मृतिः | स्वमन्त० | स्वमन्तव्यामन्तव्यप्रकाशः |
| श० ब्रा० | शतपथब्राह्मणम् | हला० | हलायुधकोशः |
| शं० स्मृ० | शङ्खस्मृतिः | हा० स्मृ० | हारीतस्मृतिः |
| शा० स्मृ० | शातातपस्मृतिः | हि० गृ० | हिरण्यकेशिगृह्यसूत्रम् |

## अन्यसंक्षेपाः

| | | | |
|---|---|---|---|
| अ० | अध्यायः | द्र०— | द्रष्टव्यः |
| अनू० | अनूदितम् | पृ० | पृष्ठम् |
| ऋ०द०स० | ऋषि दयानन्द सरस्वती | भा० | भागः |
| क्र० | क्रमशः | वि० | विक्रमोसम्वत् |
| खं० | खण्डम् | श्लो० | श्लोकः |
| तु० | तुलना | सं० | संख्या |
| द० भा० | दयानन्दभाष्यम् | सा० | सायणः |

**विशेषः**—ग्रन्थेऽस्मिन्—स० प्र०, सं० वि०, ऋ० भा० भू०, द० ल० सं० इत्येतेषां ग्रन्थानां पृष्ठसंख्या यत्र प्रदत्ता तत्र रामलाल-कपूरट्रस्टतः प्रकाशितानि अधोलिखितानि संस्कारणानि ग्राह्याणि। स० प्र०. सन् 1972; सं० वि०, सन् 1974; ऋ० भा० भू०, सन् 1967; द० ल० सं०, सन् 1975



—:o:—

# सम्मतिः

महर्षिदयानन्दकृतसंस्कारविधिमाश्रित्य विवाहगृहाश्रमप्रकरणयोरध्ययनं विधाय चण्डीगढस्थपंजाबविश्वविद्यालयीय पी-एच० डी० इत्युपाधये प्रमाणीकृतगवेषणापाटवेन डा० विक्रमकुमारेण स्वकीयः शोधप्रबन्धो वैदिकगृहाश्रमविधिग्रन्थरूपेण विद्वज्जनमनस्तोषवर्धनहेतुभूतत्वेन राराज्यते। नवधा विभक्तोऽयं शोधप्रबन्धोऽभिनवामनुसन्धानपद्धतिमनुसृत्य प्रवर्त्तते। अस्मिन् ग्रन्थे लेखकेन विवाहसंस्कारान्तर्गताः समस्तविषयो निरूपिताः। विधिप्रयुक्तानां मन्त्राणां तात्पर्यं, रहस्यं, विधीनां प्रामाण्यं चापि निघण्टुनिरुक्तव्याकरणादिशास्त्रसम्मतत्वेनैव प्रस्तुतम्। विभिन्नगृह्यसूत्रप्रमाणैर्विधितुलना खलु अपूर्वा एव।

गृहाश्रमे वैदिकादर्शविषयकं विवेचनं ग्रन्थस्यास्य स्वरूपविच्छित्तिं समुद्भासयति। यौतकं, सन्तानसंख्या, विवाहविच्छेदाद्या विकटा सामयिकसमस्या अधिकृत्य शास्त्रसम्मतानि लौकिकानि च मतान्युपनिवेशितान्यस्मिन् ग्रन्थे।

न केवलं शास्त्रचर्चामाध्यमेनैव मुखरीकृतवाग्वैखर्यः अपितु स्वजीवनेऽपि तदभ्यासपरायणो डा० विक्रमकुमारः स्वप्रतिभया सुरभारत्या गौरवं वर्धयत्विति कामये।

वेदप्रकाशः उपाध्यायः
रीडरः अध्यक्षश्च पंजाबविश्वविद्यालयीयसांध्यकालीनसंस्कृतविभागे।

# सम्मतिः

झज्जरगुरुकुलमहाविद्यालये विद्यातीर्थंकृतस्नानेन वेदादिसच्छास्त्र-पारावारावारपारीणेनापीतसरस्वतीरससारेण विद्वद्वरविक्रमकुमारेण शोधप्रबन्धहेतुना लिखितोऽयं ग्रन्थः। महर्षिदयानन्दरचितसंस्कारविधिं समाश्रित्य विवाहगृहाश्रमप्रकरणयोरध्ययनं सम्प्रति वैदिकगृहाश्रम-विधिनाम्ना प्राकाश्यं नीयत इति विज्ञायातितरां हर्षमावहति मे मानसम्। महर्षिदयानन्दरचितेषु समस्तेष्वपि ग्रन्थेषु मण्डनात्मकं कार्यमनिवार्यमिति मामकीनं निश्चप्रचम्। यतो हि महर्षिदयानन्देना-खिलानि विवादास्पदानि विषयजालमलानि पावमानीवेदधारया-ऽमलानि कृतानि, तानि साम्प्रतिके परिप्रेक्ष्ये मण्डनात्मकशोधार्थं सन्ति समुत्सुकानि। कोविद्वरेण पण्डितविक्रमकुमारेण यथा वैदिकगृहा-श्रमप्रकरणं संस्कृत्य मण्डितमेवं सकलोऽपि संस्कारविधिर्यदि मण्डितो भवेत् तर्हि वैदिकसाहित्यस्य सोऽनुपमो निधिर्भविष्यतीति मे मतम्। ग्रन्थरत्नमिदं सर्वेषामपि वैदिकविदुषां संकलनीयम्।

सुदर्शनदेवाचार्यः
संस्कृतसेवा-संस्थानम्,
रोहितकनगरम्

# आशीर्वचांसि

आर्यावर्तस्योत्कलप्रान्तसम्भवेन गुरुकुलझज्जराधीतविद्येनायुष्मता विदुषा विक्रमकुमारेण षोडशसंस्कारसमन्वितान्महर्षिदयानन्दकृतसंस्कारविधिसागरादेकं विवाहसंस्काररत्नमुद्धृत्य सश्रद्धं प्रमाणपुरस्सरं यल्लिखितं व्याख्यातं च तदस्मिन् विषयेऽपूर्वमेव संकलनमिति पठित्वा विज्ञास्यन्ति विज्ञाः।

विवाहसंस्कारे क्रियमाणानां वरसत्कार-गोदान-कन्यादान-शिलारोहण-लाजाहुति-यज्ञकुण्डप्रदक्षिणा-ग्रन्थिबन्धन-सप्तपदी-केशमोचन--सूर्य-ध्रुवारुन्धती--दर्शनप्रभृतिप्रमुखविधीनां प्रयोजनं माहात्म्यं च तत्र विनियुक्तवेदमन्त्रव्याख्यायां युक्तिभिः प्रमाणैश्च सम्यक् प्रतिपादितम्।

प्रधानहोमान्तर्गतानां राष्ट्रभृत्-जयाहोम-अभ्यातानहोम-अष्टाज्याहुतिमन्त्राणामर्थो व्याख्या वा विवाहपद्धतिपुस्तकेषु दुर्लभैव। परमस्मिन् ग्रन्थे महर्षिदयानन्दपद्धतिमनुसृत्य निघण्टुनिरुक्तव्याकरणादिप्रमाणसंवलिता प्रकरणानुसारिणी मनोहारिणी मन्त्रव्याख्या विद्यते, यामाधीत्य प्रसीदति चेतः।

सप्ताध्यायेषु विवाहविधिव्याख्यावसानानन्तरमष्टमाध्याये गृहस्थाश्रमस्य वैदिकमादर्शं प्रदर्शयता लेखकेन गृहस्थाश्रमस्य महत्त्वमेकपत्नीत्वमन्योऽन्यापरित्यागो गृहस्थस्त्रीपुरुषाणामाचारव्यवहाराः, नित्यकर्तव्यानि, गृहस्थाश्रमस्यावधिः, वेदेषु नारीणां स्थितिश्चापि सप्रमाणं प्रतिपादिता।

अन्तिमे नवमेऽध्याये प्रचलितेभ्य इतरविवाहसंस्कारविधिभ्यः स्वामिदयानन्दकृतविवाहसंस्कारविधेरन्तरं वैशिष्ट्यं च विज्ञापयन् नवग्रहपूजा-गणेशपूजा-षोडशमातृपूजादिनिरर्थकाडम्बरानखण्डयत्। महर्षिदयानन्दस्य गृहस्थाश्रमविषयकविचाराणां मानवसमाजे प्रभावं प्रदर्शयंश्च बालविवाह-विधवाविवाह-अन्तर्जातीयविवाह-स्वयंवरविवाह-स्त्रीशिक्षा-सन्तानसंख्या--विवाहविच्छेद-दहेजप्रथादिष्वपि नानाग्रन्थप्रमाणैर्महर्षिदयानन्दस्य सिद्धान्तं समपोषीत्।

विवाहविधिजिज्ञासूनां संस्कृतज्ञानां कर्मकाण्डविज्ञानां ज्ञानराशिरस्य ग्रन्थस्य पठनेन वृद्धिमेष्यतीति कामनया सह कृतभूरिपरिश्रमाय विक्रमकुमारायाशीर्वचोमिश्रितान् साधुवादान् ददामि। कामये चान्येषु संस्कारेष्वप्ययमेवंविधां व्याख्यां विधास्यतीति।

6 जनवरी, 1992 ई०

वेदव्रतः शास्त्री
आचार्य प्रिंटिंग प्रेस,
दयानन्दमठ, रोहतक।
S. T. D. 01262 दूरभाष : 72874

# प्रथमोऽध्यायः

## 1. संस्कारशब्दस्यार्थः

दोषानपनीय गुणाधानं हि संस्कारः। सोऽयं शब्दो बहुधा व्याख्यातः आचार्यैः। "संस्कारो हि गुणान्तराधानमुच्यते" इति चरकः।[1] संस्कारो नाम स भवति यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य" इति शबरः।[2] "संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा" इति शंकरः।[3] "योग्यतां चादधानाः क्रियाः संस्कारा इत्युच्यन्ते" इति तन्त्रवार्तिकम्।[4]

जातकर्मादिषु संस्कारशब्दः सम् उपसर्गात् डुकृञ् धातोः भावे करणे वा घञ्प्रत्यये सुडागमे च सिद्ध्यति। संस्करणं संस्कारः, संस्कुर्वन्ति जनान् यैस्ते वा संस्काराः। यथा स्वर्णकारो वह्निना सुवर्णं संस्करोति तथैव मातापित्राचार्यपुरोहितादयः षोडशसंस्कारैर्मानवं संस्कुर्वन्ति। तथा चाह दयानन्दः—"येन शरीरं मन आत्मा चोत्तमा भवन्ति सः संस्कारः इत्युच्यते। ते च निषेकादिश्मशानान्ताः षोडशप्रकाराः इति।[5] संस्काराणां हि मानवेन कश्चिद् घनिष्ठः सम्बन्धः। व्यक्तेः, समाजस्य, जातेः, देशस्य, राष्ट्रस्य चोत्थाने संस्काराणां मुख्यप्रभावो जायते। अत्र प्रबन्धेऽस्माभिः संस्कारशब्देन जातकर्मादिषोडशसंस्कारा ग्रहीष्यन्ते।

## 2. गृह्यसंस्काराणामुद्भवः

गृह्यसंस्काराः कथमुद्भूताः? विवेचनेनाध्ययनेन च स्पष्टं ज्ञायते यदेतेषां संस्काराणामुद्भवस्थानानि वैदिकसंहिता विद्यन्ते। चरमो विकासश्चैषां गृह्यसूत्रेषु दरीदृश्यते। लौकिकप्रथाभिरपि बहूनि विविधानि च विधिविधानानि संस्कारेषु स्थितिं प्राप्तानि।

---

1- चरकसंहिता

2- पूर्वमीमांसा सूत्रम् 3.1.3

3- वेदान्तसूत्रम् 1 1.4

4- पृ० 1078

5- स्वमन्त० सं० 27, स० प्र०, पृ० 924, अनूदितम्।

वेदेष्वनेकानि सूक्तानि मन्त्रवर्णाश्चोपलभ्यन्ते येषूपनयन—ब्रह्मचर्य-विवाहादीनां वर्णनं विलोक्यते। एतदतिरिक्तं धार्मिकविधि-विधानेषु विनियोज्या ऋचोऽपि वेदेषु प्रचुराः। सत्रेषु दीर्घसत्रेषु विवाहादिशुभावसरेषु च वेदमन्त्राणां गानं विहितम्। गृह्यसूत्रेष्वनेके वेदमन्त्रा अविकलरूपेण तथैव, केचिच्च किञ्चित् परिवर्त्य गृहीताः। एतेन सुतरां गृह्यसंस्कारेषु वैदिकप्रभावः स्फुटः। अत्र तावद् वेदेषु क्रमशः संस्काराणां मूलं संक्षिप्य प्रतिपाद्यते।

**गर्भाधानम्**

महर्षिदयानन्दीयसंस्कारविधिस्थगर्भाधानप्रकरणे मनुस्मृतेः कतिपयश्लोका उद्धृताः ये ऋतुगमनकालं परिगणयन्ति।[6] तादृशः संकेतो वेदेऽपि समुपलभ्यते—"सं पितरावृत्विये सृजेथाम्", अ० 1 '.2.2, इति। हे पितरौ मातापितरौ युवाम् ऋत्विये ऋतुकाल एव संसृजेथाम् सन्तानान्युत्पादयितुं परस्परं समागमं कुरुतमित्यर्थः।

संस्कारविधौ महर्षिणा बहवो गर्भाधानविषयका मन्त्रा वेदेभ्यो गृहीताः। यथा—विष्णुर्योनिं कल्पयतु, त्रयो मन्त्राः, ऋ. 10.184.1–3, रेतो मूत्रं विजहाति, य. 19.76, यत्ते सुसीमे हृदयं, य. 36.24, यथेयं पृथिवी मही, चत्वारो मन्त्राः, अ. 6.17.1–4, आदित्यं गर्भं पयसा समङ्धि, य. 13.41, यथा वातः पुष्करिणीं, त्रयो मन्त्राः, ऋ. 5.78.7.9, एजतु दशमास्यो गर्भो जरायुणा सह, द्वौ मन्त्रौ, य. 8.28–29

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥ ऋ. 10.184.1

मन्त्र एष गर्भाधानमूलमन्त्रः इति गो. गृ. 2.5.9, खा. गृ. 1.4.15, जै. गृ. 1 22, हि. गृ. 1.25.1 इत्यत्र पठितः। अस्य मन्त्रस्य देवताऽपि "गर्भार्थिशीः" वर्त्तते।

तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति।
या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहरेम शेपः॥[7]

अस्मिन् मन्त्रे गर्भाधानविधिर्वर्णितः। शतपथब्राह्मणकारो गर्भाधानविधिमेवं निरूपयति—"अथ यामिच्छेत् गर्भं दधीतेति तस्यामर्थं निष्ठाप्य

6- सं० वि०, पृ० 43, मनु० 3.45-50
7- अ० 14.2.38, किञ्चिद्भेदेन ऋ० 10.85.37

मुखेन मुखं सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति।"[8] इयमेव रीतिर्बृहदारण्यकोपनिषदि लभ्यते।[9]

एवमध्ययनेन ज्ञायते यद् गर्भाधानसंस्कारस्य प्रतिपादकाः सन्दर्भा वेदब्राह्मणोपनिषद्गृह्यसूत्रादिग्रन्थेषु बीजरूपेण विस्तरेण वा प्राप्यन्ते।[10]

**पुंसवनम्**

गर्भस्थितिज्ञानानन्तरं द्वितीये तृतीये वा मासे पुंसवनं क्रियते। गर्भिणीं स्त्रियं सान्त्वयितुं पुरुषस्य वीर्यलाभाय च पुंसवनं विधेयमिति गृह्यसूत्रकाराः समामनन्ति।[11]

अस्य मूलं वेदेष्वित्थं प्राप्यते—

शमीमश्वत्थ आरूढस्तत्र पुंसवनं कृतम्।
तद्वै पुत्रस्य वेदनं तत् स्त्रीष्वाभरामसि॥
पुंसि वै रेतो भवति तत् स्त्रियामनुषिच्यते।
तद् वै पुत्रस्य वेदनं तत् प्रजापतिरब्रवीत्॥ अ० 6.11.1-2

'प्रजापतिरनुमतिः", अ० 6.11.3, "आ ते गर्भो योनिमेतु" अ० 3.23.2 इत्याद्या मन्त्रा अपि दृश्यन्ते। सामवेदीयमन्त्रब्राह्मणेऽपि "पुमान् गर्भस्तवोदरे", "पुमांसं पुत्रं विन्दस्व तं पुमाननुजायताम्" इति प्राप्यते।

**सीमन्तोन्नयनम्**

संस्कारोऽयं गर्भस्य चतुर्थेऽष्टमे वा मासे विधीयते।[12] गर्भिण्याः स्त्रियाः मनःसन्तुष्ट्यै गर्भरक्षायै चायं कार्यं इत्याचार्याणां मतम्।

अथर्ववेदे शतदता कृत्रिमेण 'कंघा' इत्याख्येन कण्टकेन नार्याः शीर्षण्यकेशवर्तिमलापसारणं वर्णितं, तत् सीमन्तोन्नयनस्यैव रूपम्।[13] "राकामहं सुहवां सुष्टुतीं हुवे" इत्यादिमन्त्रो "सीव्यत्वपः सूच्याऽच्छिद्यमानया

---

8- श० ब्रा० 14.7.5.10

9- बृ० उ० 6.4.11, तु० चरकसंहिता, शरीरस्थानम् 8.8

10- एतदर्थम् ऋ० 10.184.1-3, 5.78.7, 8, 9; य० 8.28-29, 13.41, 19.76; अ० 3.23, 6.81, 6.17.1-4; मं० ब्रा० 1.4.8-9; शा०गृ० 19.5-12; पा० गृ० 1.11.5 च द्रष्टव्यम्।

11- पा० गृ० 1.14.1-2; बा० गृ० 1.19; शां० गृ० 20.1

12- पा० गृ० 1.15.2-3; आ० गृ० 1.14.1, बौ० गृ० 1.10.1; आ० गृ० 14.1; शां० गृ० 21.1

13- अ० 14.2.68

ददातु वीरं शतदायमुक्थ्यम्"[14] इत्यत्र अच्छिद्यमानया सूचीरूपशलाकया सीमन्तोन्नयनेन केशप्रसाधनकर्म सूच्यते।

सीमन्तोन्नयने केशाः प्रसाध्यन्ते। अनेनैदमपि स्पष्टीभवति यत् स्त्री केशिनी भवेत्। वेदेष्वनेकत्र तदुल्लेखा विद्यन्ते। यथा—"तमग्रुवः केशिनीः सं हि रेभिरे", ऋ० 1.140.8, 'आ वामृताय केशिनीरनूषत" ऋ० 1.151.6.

सामवेदीयमन्त्रब्राह्मणे स्पष्टमेव सीमन्तोन्नयनचर्चा प्राप्यते—"येनादितेः सीमानं नयति प्रजापतिर्महते सौभगाय। तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि।" मं० ब्रा० 1.5.2, यथा प्रजापतिः महैश्वर्य-प्राप्तये "अदितिं" विभजति तथैवाहं सन्तानदीर्घायुष्याय अस्याः केशान् विभजामीत्यर्थः। नारी च तत्र सुसीमेत्युक्ता "यत्ते सुसीमे" इति। मं० ब्रा० 1.5.10

**जातकर्म**

प्रसवकाले जलेन स्त्रियं मार्जयन्ति प्रसवानन्तरं स्वर्णशलाकया घृतं मधु च बालकं प्राशयन्ति।[15]

"एजतु दशमास्यो गर्भो जरायुणा सह", य० 8.28, "अपश्यं जातं यदसूत माता", ऋ० 5.2.2, "शिशुं न जातम्," ऋ० 3.1.4, "त्वां विश्वे अमृत जायमानम् शिशुं न देवा अभि सं नवन्ते", ऋ०6.7.4, इत्याद्याः शिशुजनसूचका वेदमन्त्राः, "यस्ते स्तनः शशयो यो मयोभूः ··सरस्वति तमिह धातवे कः", ऋ० 1.164.49, अ० 7.10.1, य० 38.5, तै० आ० 4.8.2, श० ब्रा० 14.9.4.28 इति जातस्य शिशोः स्तन्यपानमन्त्रः, "अङ्गादङ्गात् संभवसि हृदयादधि-जायसे" इत्याद्या मन्त्रब्राह्मणोक्ताः, मं० ब्रा० 1.5.16.19, प्रसङ्गाश्च जातकर्मसंस्कारस्य मूलोद्भवत्वं प्रतिपद्यन्ते।

**नामकरणम्**

जातस्य नाम कुर्यात्। एकादशतमे शततमे द्वितीयवर्षस्यारम्भे दिने वा अस्मै नाम दद्युः।[16]

---

14- ऋ० 2.32.4; हि० गृ० 2.1.3, आ० गृ० 1.14.3, गो० गृ० 2.7.7, इत्यादिषु गृह्यसूत्रेषु मूलरूपेणायमेव मन्त्रः प्रदर्शितः।

15- पा० गृ० 1.16.1-2; आ० गृ० 1.15.1; गो० गृ० 2.7.19-21; शां० गृ० 23.3

16- आ० गृ० 1.15.4-10, पा०गृ० 1.17. 1-4, गो० गृ० 2.8.8, खा० गृ० 2.3.6, वा०गृ० 1.2.1-3, आ०गृ० 15.8-11, शां०गृ० 24.8, 23.4-5

अयं तावद् वैदिकमूलमन्त्रः—

कोऽसि कतमोऽसि कस्यासि को नामासि ।
यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम ॥ य० 7.29

हे वालक, त्वं कः, बहुषु कतमः, कस्य पुत्रः, किंनामा च असि येन नाम्ना वयं त्वाम् आह्वयेम जानीयाम वा। यं च त्वां वयं रसौषध्यादि-पदार्थजातेन सोमेन तृप्तं कुर्यामित्यर्थः। गो० गृ० सूत्रं 2.8.14, खा० गृ० सूत्रं 2.3.9, चापि मन्त्रमिमं नामकरणस्य मूलत्वेन मन्वाते। "यो देवानां नामधा एक एव"; ऋ० 10.82.3, इत्यत्रापि नामकरणसंकेतः प्राप्यते। "कोऽस्मिन् रूपमदधात् को मह्यानं च नाम च", अ० 10.2.12, "बृहस्पते प्रथमं वाचो अग्रं यत् प्रैरत नामधेयं दधानाः", ऋ० 10.71.1, इति मन्त्रावपि नामकरणस्यावश्यकतां सुस्पष्टं प्रतिपादयतः।

**निष्क्रमणम्**

चतुर्थे मासे बालकस्य गृहाद्बहिर्निष्क्रमणं कार्यंते,[17] जन्मनस्तृतीयशुक्लपक्षस्य तृतीयायां वा।[18]

निष्क्रमणसंस्कारस्योद्देश्यमस्ति यद् वालको गृहाद्बहिः शुद्धवायौ विस्तृतवातावरणे च गत्वा भ्रमणं कुर्यात्। वेदेषु यद्यपि स्पष्टरूपेण निष्क्रमणसंस्कारस्य चर्चा न प्राप्यते तथापि तत्र अरण्योः शिशुरग्निः, द्यावापृथिव्योः समुद्रस्य वा शिशुः सूर्यः, सोमौषध्या शिशुः सोमरसश्च शिशुरूपेण जन्म लब्ध्वा समुन्नत्यै बहिर्वातावरणं गच्छन्ति। अग्निरूपस्य शिशोर्विषये मन्त्रोऽयं द्रष्टव्यः—

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना ।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः ॥
ऋ० 10.5.3

अग्निं हि पूर्वं माता पृथिवी स्वाङ्के स्वगृहे वा धारयति तदनन्तरम् असौ वन्धनाद् विसृष्टः पशुरिवान्तरिक्षं गच्छति। किञ्च—

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमांस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद् गाः ॥
ऋ० 10.1.2

---

17- पा० गृ० 1.17.5-6

18- गो० गृ० 2.8.1

अग्निरयम् ओषधिषु पुत्ररूपेण समुत्पन्नो वाणीरुच्चारयन् पृथिव्यां इतस्ततः क्रीडति।

सूर्योऽपि—"समुद्रादूर्मिर्मधुमाँ उदारत्", ऋ० 4.58.1, "दिवस्पुत्राय सूर्याय शंसत", ऋ० 10.37.1 इत्यादिमन्त्रैर्वर्णितः पूर्वं पृथिव्याः समुद्रस्य वा क्रोडे तिष्ठति, परं शनैः शनैः अन्तरिक्षमारोहति। यथोक्तम्—

हरिः सुपर्णो दिवमारुहोऽर्चिषा ये त्वा दिप्सन्ति दिवमुत्पतन्तम्।
अव तान् जहि हरसा जातवेदोऽबिभ्यदुग्रोऽर्चिषा दिवमारोह सूर्य॥
अ० 19.65.1

सोमोऽपि सोमलताभ्यो जनिं संप्राप्य शिशुरिव क्रीडन् इतस्ततो गच्छति—"सोमः पुनानो अव्यये वारे शिशुर्न क्रीडन् पवमानो अक्षाः", ऋ० 9.110.10

मरुतोऽपि गृहे स्थिताः शिशव इव शुभ्रमनस्काः पयःपायिनो बहिर्गत्वा क्रीडापरायणा वत्सा इव च भवन्ति—"ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः", ऋ० 7.56.16

एवं स्वाभाविकं यदग्निवत् सूर्यवत् सोमवत् मरुद्वच्च मानवाः शिशवोऽपि यथाकालं सङ्कुचितं गृहक्षेत्रं परित्यज्य मानसोल्लासाय शारीरिकस्वास्थ्याय च गृहान्निष्क्रमणं कुर्युः। अत एव गृह्यसूत्रेषु निष्क्रमणसंस्कारो विहितः। तत्र च "तच्चक्षुर्देवहितं", य० 36.24, "अस्मे प्रयन्धि मघवन्", ऋ० 3 36.10, "इन्द्र श्रेष्ठानि द्रविणानि धेहि", ऋ० 2.21.6 इति वेदमन्त्राः, "ओं यत्ते सुसीमे हृदयं" इत्याद्याः मन्त्रब्राह्मणोक्ताः, मं० ब्रा० 1.5.10-12, मन्त्राश्चापि विनियुक्ताः।

**अन्नप्राशनम्**

जातस्य शिशोः षष्ठे मासेऽयं विधीयते। दधिमधुघृतमिश्रितमन्नञ्च तदानीं तं प्राशयन्ति।[19]

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे॥
य० 11.83

इति यजुर्वेदीयो मन्त्रः आ० गृ० 1.16.5, जै० गृ० 1.10, मा० गृ० 1.20.2, कौषी० गृ० 1.27.4 इत्यादिषु सर्वत्र अन्नप्राशनसंस्कारस्य मूलत्वेनाभिमतः।

19- आ० गृ० 1.16.1, 4-5

**चूडाकर्म**

मुण्डनम्, चौलम्, केशच्छेदनम्, केशवपनम्, क्षौरम् इत्यादयश्चूडाकर्मणः पर्यायाः। जातस्य प्रथमे तृतीये वा संवत्सरे चूडाकर्म क्रियते।[20] पुष्ट्यै, वृष्याय, आयुष्याय, शुचितायै, सौन्दर्याय च चूडाकर्म विधेयमिति अग्निवेशः।[21]

> ओं आयमगन्त्सविता क्षुरेणोष्णेन वाय उदकेनेहि।
> आदित्या रुद्रा वसव उन्दन्तु सचेतसः सोमस्य राज्ञो वपत प्रचेतसः॥
> अ० 6.38.1

इति मूलमन्त्रः। हे नापित, क्षुरेण सह त्वमागतोऽसि, उष्णेन जलेन त्वं मुण्डनार्थम् एहि आगच्छेत्यर्थः। पा० गृ० 2.1.6, गो० गृ० 2.9.2, आ० गृ० 1.16.6, खा० गृ० 2.3.10, मा० गृ० 1.21.2, जं० गृ० 1.11, इत्यादिष्वपि मूलमन्त्रत्वेनायं पठितः।

किञ्च, "अदितिः श्मश्रु वपतु", अ० 6.68.2, "येनावपत् सविता क्षुरेण", अ० 6.68.3, "यत् क्षुरेण मर्चयता सुतेजसा", अ० 8.2.17, "शिवो नामासि स्वधितिस्ते पिता", य० 3.63 इत्येतत्प्रभृतयो वेदमन्त्राः, "ओम् ओषधे त्रायस्वैनम्", ओं विष्णोर्दंष्ट्रोऽसि", ओं स्वधिते मैनं हिंसीः", "ओं येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय वर्चसे" इति च ब्राह्मणोक्ताः, मं० ब्रा० 1.6.4,5,7 सन्दर्भाः संस्कारविधौ पठिताः, येऽस्य संस्कारस्य मूलत्वं भजन्ते।

**कर्णवेधः**

जातस्य तृतीये पञ्चमे वा वर्षे कर्णवेधः क्रियते।[22] आश्वलायन-आपस्तम्ब-मानव-गोभिल - शांखायन - हिरण्यकेशि-जैमिनि - कौशिक-वाराह-वैखानसादिगृह्यसूत्रेषु कर्णवेधसंस्कारस्योल्लेखो नास्ति। सुश्रुतस्य सूत्रस्थाने षोडशतमाध्यायेऽस्य संस्कारस्य वर्णनमुपलभ्यते—"रक्षाभूषणनिमित्तं बालस्य कर्णौ विध्येत्", सु० सू० स्था० 16.1, "विध्येदन्त्रवृद्धिनिवृत्तये", सु० सू० स्था० 19.21, इत्यादि।

"भद्रं कर्णेभिः शृणुयाम देवा", यजु० 25.21, "वक्ष्यन्तीवेदा गनीगन्ति कर्णम्", यजु० 29.40 इति मन्त्रद्वयं महर्षिणा संस्कारविधौ संस्कारेऽस्मिन्

---

20- पा० गृ० 2.1.1, आ० गृ० 1.17.1, गो० गृ० 2.9.1

21- च० स०, सू० स्था० 5.93

22- कात्या० गृ० 1-2

विनियुक्तम्। इतोऽतिरिक्तं "लोहितेन स्वधितिना मिथुनं कर्णयोः कृधि,... एवा सहस्रपोषाय कृणुतं लक्ष्माश्विना", अ० 6.141.2-3 इत्याद्या मन्त्रा अपि संस्कारस्यास्य मूलत्वं प्रपद्यन्ते।

**उपनयनम्**

"युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः", ऋ० 3.8.4.। दृढ़ाङ्गः सुवस्त्रालङ्कृतः यज्ञोपवीतवान् ब्रह्मचारी आचार्यकुलमायाति। स हि श्रेयान् भवति। बुद्धिमन्तो विद्वांसः मनसा कामयमानास्तं ब्रह्मचारिणमुन्नयन्तीत्यर्थः।

आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः। तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभि संयन्ति देवाः॥ अ० 11.7.3, इत्यत्र स्पष्टमेवोक्तम् आचार्यो ब्रह्मचारिणमुपनयत इति। यजुर्वेदेऽप्युक्तम्—"नमो हरिकेशायोपवीतिने", य० 16.17 इति। "अत्र महीधरोक्तिः— उपवीतिने मंगलार्थं यज्ञोपवीतधारिणे" इति। स्वामिदयानन्देनापि स्वभाष्ये व्याख्यातम्—"उपवीतिने प्रशस्तमुपवीतं यज्ञोपवितं विद्यते यस्य तस्मै" इत्येवंविधा वेदमन्त्राः संस्कारस्यास्य समुद्भवे मूलतां प्रयान्ति।

**वेदारम्भः**

उपनयनानन्तरं साङ्गोपाङ्गवेदाध्ययनार्थमयं क्रियते। वेदाध्ययनं हि मानवानां श्रेष्ठं कर्म। "सं श्रुतेन गमेमहि मा श्रुतेन विराधिषि", अ० 1.1.4, ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते", अ० 7.54.1, "श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः", अ० 7.61.2, "स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम्", अ० 19.71.1, "यस्मात् कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम्", अ० 19.72.1 इत्यादयो वैदिका मन्त्रा वेदाध्ययनस्य प्रेरणां लाभं च प्रतिपादयन्ति। ऋग्वेदीयबृहस्पतिसूक्ते "उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु। अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ऋ० 10.71.5 इत्यादि मन्त्रेष्वपि वेदाध्ययनप्रकारो वर्णितः। तमेव वेदं वेदारम्भे आचार्याधीनः सन् ब्रह्माचारी प्रारभते। अतो वेदानुमोदित एवायं संस्कारः।

**समावर्त्तनम्**

ब्रह्मचर्यपूर्वकं वेदाध्ययनानन्तरमाचार्यकुलात् पितृकुलागमनं समावर्तनमिति कथ्यते।[23]

---

23- आ० गृ० 1.22.16, 1.23.20, 1.24.2-7, पा० गृ० 2.6.1-2

"ब्रह्मचार्येति समिधा समिद्धः कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः। स सद्य एति पूर्वस्मादुत्तरं समुद्रं लोकान्त्संगृभ्य मुहुराचरिक्रत् ॥ तानि कल्पद् ब्रह्मचारी सलिलस्य पृष्ठे तपोऽतिष्ठत्तप्यमानः समुद्रे। स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते ॥" अ० 11.7.6, 26 इत्यथर्ववेदीयब्रह्मचर्यसूक्तस्य मन्त्रद्वयमपि संस्कारस्यास्य मूलम्। ब्रह्मचारी खलु ज्ञानतेजसा समिद्धः, कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः गुरुकुले वसन् समापवर्त्तनसंस्कारपुरस्सरं पितृगृहमेति। स्नातश्च सन् स पृथिव्यां बहु रोचते।

**विवाहः**

एतद्विषयकवेदमन्त्रास्तु प्रबन्धस्यैतस्य स्थले स्थले द्रष्टव्या भवन्ति। ऋग्वेदीयं 10.85 सूक्तम्, अथर्ववेदीयं सूक्तद्वयगर्भं चतुर्दश-काण्डं च समग्रं विवाहविषयकमेव। अन्येऽपि मन्त्रा यत्र तत्र प्राप्यन्ते। कौशिकसूत्रे गृह्यसूत्रेषु च ऋग्वेदीया अथर्ववेदीयाश्च बहवो मन्त्रा विवाहविधिषु विनियुक्ताः। सोमो वधूयुर्भवति, तस्य सूर्यया सह विवाहः कल्पितः। प्रकृतौ यथा सोम-सूर्यदीधित्योर्विवाह इव सम्पद्यते, तथैव मानवसमाजेऽपि वरवध्वोर्विवाहः शास्त्रकारैर्वैदिकसूक्तैः समुद्वीक्षितः। प्रबन्धस्यैव विवाहविषयत्वान्नात्राधिकं प्रपञ्च्यते, प्रकरणा-नुरूपं तत्र तत्र वर्णयिष्यामः। विवाहसंस्कारस्य वेदमूलत्वं तु निर्विवादमेव।

**वानप्रस्थः संन्यासश्च**

वानप्रस्थः गृहाश्रमानन्तरं पुत्रस्य पुत्रे जाते सति क्रियते। तदानीं गृहस्थः गृहं त्यक्त्वा वने निवसति। संन्यासश्च संसारासक्तेः वैराग्यानन्तरं भवति।[24] यद्यपि वानप्रस्थ-संन्यासशब्दौ वेदेषु नावाप्येते, तथापि वानप्रस्थ-संन्यासार्थकौ मुनियतिशब्दौ बहुधा पठ्येते। यथा—

> वातस्याश्वो वायोः सखाऽथो देवेषितो मुनिः।
> उभौ समुद्रावाक्षेति यश्च पूर्व उतापरः ॥ ऋ० 10.136.5

वायुभक्षः ईश्वरसखा विद्वद्भिः प्रेरितः मुनिः मननशीलो वानप्रस्थाश्रमस्थः पुरुषः उभौ समुद्रौ समुद्रवद्गभीरौ वानप्रस्थ-संन्यासाश्रमौ, तयोराश्रमयोरित्यर्थः आक्षेति निवसति। यश्च पूर्वं उतापरः प्रथमो यो वानप्रस्थाश्रमः, द्वितीयश्च यः संन्यासाश्रमस्तत्रेति यावत्।

24- जाबालोपनिषद् खं० 4, मुण्ड० उ० 1.1.11

मुनयो वातरशनाः पिङ्गला वसते मला ।
वातस्यानु ध्राजिं यन्ति यद्देवासो अविक्षत ॥ ऋ० 10.136.2

ते हि वानप्रस्था मुनयो वातरशनाः प्राणायामपरायणाः पिङ्गला पिशङ्गानि मला मलिनवर्णानि वस्त्राणि वसते धारयन्ति ।

यद्देवा यतयो यथा भुवनान्यपिन्वत ।
अत्रा समुद्र आ गूळ्हमा सूर्यमजभर्त्तन ॥ ऋ० 10.72.7

यतयः संन्यासिनो यथा भुवनानि पिन्वन्ति ज्ञानेन सिञ्चन्ति तथैव देवाः सूर्यरश्म्यादयोऽपि भुवनानि प्रकाशादिभिः अपिन्वत असिञ्चन्नित्युपमा । अत्र यतय उपमानभूतत्वात् प्रसिद्धाः, अप्रसिद्धानामुपमेयानां प्रसिद्धैरुपमानैरुपमालङ्कारे साम्यस्य विवक्षितत्वात् ।

एवमेव "य इन्द्र यतयस्त्वा", ऋ० 8.6.18, "वैश्वानराय यतये मतीनाम्", ऋ० 7.13.1, "येना यतिभ्यो भृगवे धने हिते", ऋ० 8.3.9 इत्याद्या वेदमन्त्रा अपि प्रमाणत्वेन ग्राह्याः ।

मुनिशब्देन वानप्रस्थस्य ग्रहणे "मुन्यन्नैर्विविधैर्मेध्यैः", मनु० 6.5, "मुन्यन्नैः स्वयमाहृतैः", मनु० 6.11, "मुन्यन्नं पूर्वसञ्चितम्", मनु० 6.15, "मुनिर्मूलफलाशनः", मनु० 6.25 इत्यादीनि मनुवाक्यानि प्रमाणम् ।

यतिशब्देन च संन्यासी गृह्यत इत्यत्र "संन्यासयोगाद्यतयः शुद्धसत्त्वाः" मुण्ड० उ० 3.2.6, "एष धर्मोऽनुशिष्टो वो यतीनां नियतात्मनाम्", मनु० 6.86, "भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति", मनु० 6.55, "भिक्षां नित्यं यतिश्चरेत्", मनु० 6.56, "यतिर्मुक्तोऽपि बद्ध्यते", मनु० 6.58, "हिनस्त्यज्ञानतो यतिः" मनु० 6.69, "ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा", मनु० 6.87 इत्येतानि वाक्यानि प्रमाणम् । स्वामिदयानन्देनाप्युक्तम्-वेदेषु "यतयः", "ब्राह्मणस्य विजानतः" इत्यादिपदैः संन्यासस्य विधानं कृतम् इति ।[25]

अन्त्येष्टिः

अन्त्ये भवा इष्टिः अन्त्येष्टिः । पुरुषमेधः, नरमेधः, पुरुषयागः, नरयागः अस्यैव संस्कारस्य पर्यायाः । मरणान्ते देहस्यायमेव संस्कारः क्रियते—"भस्मान्तँ शरीरमिति", यजु० 40.15

संस्कारविधौ बहवोऽन्त्येष्टिपरा वेदमन्त्रा उद्धृताः, ते तत्र द्रष्टव्याः । यथा—ऋग् 10.14, 10.16, 10.154 इत्याद्याः । ततोऽन्यानि,

25- स० प्र०, पृ० 183, अनूदितम्

ऋग्वेदीयं मृत्युसूक्तम् 10.18, अथर्ववेदीयम् अष्टादशकाण्डम् इत्यादीन्यपि संस्कारस्यास्य मूलतां प्रपद्यन्ते। वेदेषु शवस्याग्निदाहो विस्तरेण चर्चितः।

## 3- वेदानां गृह्यसूत्राणि

समस्तगृह्यसूत्राणि वेदान् एव आश्रयन्ति। वेदेभ्य एव मूलतः संगृहीताः क्वचिच्च स्वाविष्कृता मन्त्रा गर्भाधानादिसंस्कारेषु तत्र तत्र विनियुक्ताः। ऋग्वेदेन सम्बद्धानि गृह्यसूत्राणि तावद्—1. शाङ्खायनम्, 2. कौषीतकम्, 3. आश्वलायनं च। ऋग्वेदस्य शाङ्खायनशाखया शाङ्खायनगृह्यसूत्रं, कौषीतकिशाखया कौषीतकगृह्यसूत्रम्, आश्वलायनशाखया चाश्वलायनगृह्यसूत्रं सम्बद्धम्। एतदतिरिक्तमप्रकाशितान्यपि कानिचिद्गृह्यसूत्राणि ऋग्वेदीयानि यत्र तत्र साहित्येषु पठ्यन्ते। यथा—1. शौनकम्, 2. भारवीयम्, 3. शाकल्यम्, 4. पैङ्गि, 5. पाराशरम्, 6. बह्वृचम्, 7. ऐतरेयम्। कृष्णयजुर्वेदस्य—1. बौधायनम्, 2. भारद्वाजम्, 3 आपस्तम्बम्, 4. हिरण्यकेशि (सत्याषाढं वा), 5. वैखानसम्, 6. आग्निवेश्यम्, 7. मानवम्, 8. काठकम् (लौगाक्षि वा), 9. वाराहम्, 10. शाण्डिल्यम्, 11. माविलम्, 12. मैत्रेयम् च। शुक्लयजुर्वेदस्य--1. पारस्करम्, 2. बैजवापम् च। सामवेदस्य—1. गोभिलम्, 2. खादिरम्, 3. जैमिनीयम्, 4. द्राह्यायणम्, 5. कौथुमम्, 6. गौतमम्, 7. छान्दोग्यम् च। अथर्ववेदस्य च कौशिकसूत्रेतिनाम्ना प्रसिद्धमेकमेव सूत्रं, यस्य गृह्यसूत्रत्वं सन्दिग्धमेव।[26]

## 4. गृह्यसूत्रेषु इतरसाहित्येषु च वर्णिताः संस्काराः

विभिन्नगृह्यसूत्रेषु, स्मृतिषु, धर्मशास्त्रेषु च संस्काराणां संख्या विभिन्नैव कीर्तिता। संक्षेपेणात्र विविधग्रन्थेषु वर्णिताः संस्काराः प्रतिपाद्यन्ते—

शाङ्खायनगृह्यसूत्रे—द्वादश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4. गर्भरक्षणम्, 5. सीमन्तोन्नयनम्, 6. जातकर्म, 7. अन्नप्राशनम्, 8. चूडाकर्म, 9. गोदानम् (केशान्तः), 10. उपनयनम्, 11. वेदारम्भः, 12. समावर्तनम्।

26- द्र० डा० रामगोपालः, इण्डिया आफ वैदिककल्पसूत्राज्, सन् 1959 पृ० 20-22

आश्वलायनगृह्यसूत्रे—त्रयोदश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4 सीमन्तोन्नयनम्, 5. जातकर्म, 6. नामकरणम्, 7. अन्नप्राशनम्, 8. चौलः (चूडाकर्म), 9. उपनयनम्, 10. वेदारम्भः, 11. गोदानम् (केशान्तः), 12. समावर्त्तनम्, 13. अन्त्येष्टिः।

बोधायनगृह्यसूत्रे—त्रयोदश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4. सीमन्तोन्नयनम्, 5. जातकर्म, 6. नामकरणम्, 7. उपनिष्क्रमणम्, 8. अन्नप्राशनम्, 9. चूडाकर्म, 10. कर्णवेधः, 11. उपनयनम्, 12. समावर्तनम्, 13. पितृमेधः।

आपस्तम्बगृह्यसूत्रे—द्वादश। 1. विवाहः 2. ऋतुगमनम्, 3 पुंसवनम्, 4. सीमन्तोन्नयनम्, 5. जातकर्म, 6. नामकरणम्, 7. अन्नप्राशनम्, 8. चौलः, 9. गोदानम्, 10. उपनयनम्, 11. वेदारम्भः, 12. समावर्तनम्।

हिरण्यकेशिगृह्यसूत्रे—दश। 1. उपनयनम्, 2. वेदारम्भः, 3. समावर्तनम्, 4. विवाहः, 5. चतुर्थीकर्म, 6. सीमन्तोन्नयनम्, 7. पुंसवनम्, 8. जातकर्म, 9. चूडाकर्म, 10. गोदानम्।

वैखानसगृह्यसूत्रे—अष्टादश। 1. ऋतुसंगमनम्, 2. गर्भाधानम्, 3. सीमन्तः, 4. विष्णुबलिः, 5. जातकर्म, 6. उत्थानम्, 7. नामकरणम्, 8. अन्नप्राशनम्, 9. प्रवसागमनम्. 10. पिण्डवर्धनम्, 11. चौलकः, 12. उपनयनम्, 13. पारायणम्, 14. व्रतबन्धविसर्गः, 15. उपाकर्म, 16. उत्सर्जनम्, 17. समावर्तनम्, 18. पाणिग्रहणम्।

वाराहगृह्यसूत्रे—त्रयोदश। 1. जातकर्म, 2. नामकरणम्, 3. दन्तोद्गमनम्, 4. अन्नप्राशनम्, 5. चूडाकर्म, 6. उपनयनम्, 7 वेदव्रतानि, 8. गोदानम्, 9. समावर्तनम्, 10. विवाहः, 11. गर्भाधानम्, 12. पुंसवनम्, 13. सीमन्तोन्नयनम्।

पारस्करगृह्यसूत्रे—चतुर्दश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4. सीमन्तोन्नयनम्, 5. जातकर्म, 6. नामकरणम्, 7. निष्क्रमणम्, 8. अन्नप्राशनम्, 9. चूडाकर्म, 10. कर्णवेधः, 11. उपनयनम्, 12. वेदारम्भः, 13. केशान्तः, 14. समावर्तनम्।

गोभिलगृह्यसूत्रे—द्वादश। 1. विवाहः, 2. गर्भाधनम्, 3. पुंसवनम्, 4. सीमन्तकरणम्, 5. जातकर्म, 6. निष्क्रमणम्, 7. नामधेयकरणम्,

8. चूडाकरणम्, 9. उपनयनम्, 10. वेदारम्भः, 11. गोदानम्, 12. समावर्तनम्।

खादिरगृह्यसूत्रे—एकादश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4. सीमन्तोन्नयनम्, 5 जातकर्म, 6. निष्क्रमणम्, 7. नामकरणम्, 8. चौलः, 9. उपनयनम्, 10 वेदारम्भः, 11. गोदानम्।

जैमिनीयगृह्यसूत्रे—एकादश। 1. विवाहः, 2. गर्भाधानम्, 3. पुंसवनम्, 4. सीमन्तोन्नयनम्, 5. जातकर्म, 6. नामकर्म, 7. प्राशनकर्म, 8. चौलकर्म, 9. उपनयनम्, 10. गोदानम्, 11. समावर्तनम्।

कौशिकसूत्रे—दश। 1. विवाहः, 2. चतुर्थीकर्म, 3. नामकरणम्, 4. अन्नप्राशनम्, 5. निष्क्रमणम्, 6. गोदानम्, 7. चूडाकरणम्, 8. उपनयनम्, 9. वेदारम्भः, 10. पितृमेधः।

मनुस्मृतौ—चतुर्दश। 1. गर्भाधानम्, 2. जातकर्म, 3. नामकरणम्, 4. निष्क्रमणम्, 5. अन्नप्राशनम्, 6. चूडाकर्म, 7. उपनयनम्, 8. केशान्तः, 9. वेदारम्भः, 10. समावर्तनम्, 11. विवाहः, 12. वानप्रस्थः, 13. संन्यासः, 14. अन्त्येष्टिः।[27]

याज्ञवल्क्यस्मृतौ—पञ्चदश। 1. गर्भाधानम्, 2. पुंसवनम्, 3. सीमन्तः, 4. जातकर्म, 5. नामकरणम्, 6 निष्क्रमणम्, 7. अन्नप्राशनम्, 8. चूडाकर्म, 9. उपनयनम्, 10. केशान्तः, 11. वेदारम्भः, 12. समावर्तनम्, 13. विवाहः, 14. वानप्रस्थः, 15. यतिधर्मः (संन्यासः)।[28]

अङ्गिरःस्मृतौ पञ्चविंशतिसंस्काराणामुल्लेखः।[29] व्यासस्मृतौ गर्भाधान-पुंसवन-सीमन्त - जातकर्म-नामक्रिया - निष्क्रमण-अन्नप्राशन-वपनक्रिया-कर्णवेध-व्रतादेश-वेदारम्भ-केशान्त-स्नान-उद्वाह-विवाहाग्नि-परिग्रह-त्रैताग्नि-संग्रहरूपाः षोडशसंस्काराः परिगणिताः।[30] गौतमस्मृतौ चत्वारिंशत् संस्काराः सनामग्राहं वर्णिताः। परं तत्र गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-अन्नप्राशन-चौल-उपनयन-चतुर्वेदव्रत-स्नान-सहधर्मचारिणीसंयोगरूपा एकादशैव संस्कारत्वेन ग्रहीतुं शक्यन्ते।

27- मनु० 2.16,26,29,30,34,35,36.245; 3.1-2,'; 6.1-4,33
28- या० स्मृ० 1.11-12, 15, 16, 36, 51; 3.45, 57
29- द्र० वी० मि०, भा०।
30- व्या० स्मृ० अ० 1, श्लो० 14-16

तदतिरिक्तत्वेन तु पञ्च महायज्ञाः, सप्त पाकयज्ञसंस्थाः, सप्त हविर्यज्ञसंस्थाः, सप्त च सोमयज्ञसंस्था एव वर्णिताः ।[31]

## 5- स्वामिदयानन्दकृतसंस्कारविधौ स्वीकृताः संस्काराः

स्वामिदयानन्देन विभिन्नगृह्यसूत्राणि मनुस्मृतिं च विविच्य षोडशसंस्कारा एव स्वीकृताः—1. गर्भाधानम्, 2. पुंसवनम्, 3. सीमन्तोन्नयनम्, 4. जातकर्म, 5. नामकरणम्, 6. निष्क्रमणम्, 7. अन्नप्राशनम्, 8. चूडाकर्म, 9. कर्णवेधः, 10. उपनयनम्, 11. वेदारम्भः, 12. समावर्तनम्, 13. विवाहः, 14. वानप्रस्थः, 15. संन्यासः, 16. अन्त्येष्टिः ।

यद्यपि अन्यगृह्यसूत्रेषु संस्काराणां संख्या षोडशसंख्यातो न्यूनाधिका वर्त्तते तथापि महर्षिप्रतिपादितषोडशसंस्कारा एव वैशिष्ट्यं महत्त्वञ्च भजन्ते । स्वामिदयानन्देन विशेषतः पारस्करगृह्यसूत्रमेवानुसृत्य संस्कारा वर्णिताः । स्वामिनः संस्कारविधिः स्थाने स्थाने आश्वलायनगृह्यसूत्रं गोभिलगृह्यसूत्रञ्चाप्यनुसरति । पारस्करादिगृह्यसूत्रेषु वानप्रस्थसंन्यासान्त्येष्टिसंस्कारा नैव प्राप्यन्ते ।[32] परं स्वामिदयानन्देन स्वरचितसंस्कारविधौ एते संस्काराः संनिवेशिताः, मनुस्मृतिर्येषां मूलम् । सत्यार्थप्रकाशस्य पञ्चमसमुल्लासेऽपि वानप्रस्थसंन्यासविषयस्तद्धर्मश्च प्रतिपादिताः ।

पारस्करगृह्यसूत्रे वेदारम्भानन्तरं केशान्ताख्यः संस्कारोऽपि स्वीकृतः, कैश्चिदयं गोदानसंज्ञया व्यपदिष्टः । परं स समावर्तनसंस्कार एवान्तर्भवतीति स्वामिना पृथक्तया नैवाङ्गीकृतः । शांखायनगृह्यसूत्रे पुंसवनसीमन्तोन्नयनयोर्मध्ये गर्भरक्षणसंस्कारोऽपि लभ्यते, परं स सीमन्तोन्नयनसंस्कारेऽन्तर्भवति । हिरण्यगृह्यसूत्रे कौशिकसूत्रे च वर्णितश्चतुर्थीकर्माख्यः संस्कारो गर्भाधानस्यैव पर्यायः । वाराहगृह्यसूत्रे दन्तोद्गमनसंस्कारोऽपि वर्णितः । परं बाल्यकाले दन्तोद्गमनसमयस्यानिश्चयात् संस्कारविधौ संस्कारेषु नैव परिगणितः । वैखानसगृह्यसूत्रे वर्णिताः पारायण-व्रतबन्धविसर्ग-उपाकर्म-उत्सर्जनाख्याः संस्काराः

31- गो० स्मृ० 8.2

32- अन्त्येष्टिराश्वलायने संस्कारत्वेनाभिमता ।

वेदारम्भसंस्कारेऽन्तर्भवन्ति । ऋतुसंगमनसंस्कारोऽपि गर्भाधानसंस्कारस्यैव रूपान्तरम् । विष्णुबलिसंस्कारो गर्भस्याष्टमासाभ्यन्तरे कष्टरहितप्रसवाय शिशुस्वास्थ्यवृद्धयर्थञ्च सम्पाद्यत इति वसिष्ठः ।[33] अयं सीमन्तोन्नयनसंस्कारेऽन्तर्भवति । उत्थानसंज्ञः संस्कारः प्रसवानन्तरं दशमे द्वादशे वा दिवसे गृहशुद्ध्यर्थं विधीयते ।[34] अयं जातकर्मसंस्कारे विलीयते । सोष्यन्तीकर्म जातकर्मण एव पर्यायः ।[35] गौतमेन परिगणिता अनेके संस्कारा यज्ञभेदत्वात् संस्कारविधौ न गृहीताः ।[36] अङ्गिरःपरिगणितेष्वपि केचन यज्ञभेदत्वादेवोपेक्षिताः ।

## 6 संस्काराणां महत्त्वम्

वैदिकमहर्षिभिः संस्कारमहत्त्वं सम्यक् वर्णितम् । संस्कारैर्न केवलं मानवः परिवर्तते, परं व्यक्तिपरिवर्त्तनद्वारा समष्टिरपि परिवर्त्तते । एवं शनैश्शनैः समाजस्याङ्गभूतानां मनुजानां संस्कारेण समाजो राष्ट्रं चापि संस्क्रियते समुदयं च भजते ।

"जन्मना जायते शुद्रः संस्काराद् द्विज उच्यते" इति प्रसिद्धम् ।[37] प्राङ्मौञ्जीबन्धनाद् द्विजः शूद्रसमो भवतीति विष्णुः ।[38] संस्कारैरेव जनानामशुभाश्चित्तवृत्तयोऽपाक्रियन्ते शुभा आधीयन्ते सुदृढीक्रियन्ते च ।

यथाऽनेकै रङ्गैश्चित्रं मनोहारि जायते तथैव विविधसंस्कारै-

---

33- द्र०—हिस्ट्री आफ धर्मशास्त्र, पी० वी० काणे, ख० 2 भा० 1, 1974, पृ० 193

34- तदेव, पृ० 237

35- द्र०—पा० गृ० 1.16.।

36- अत्र हारीतमतम्—"द्विविधः संस्कारो भवति ब्राह्मो दैवश्च । गर्भाधानादिस्मार्तो ब्राह्मः । पाकयज्ञहविर्यज्ञसौम्याश्चेति दैवः ।" द्र०—हिस्ट्री आफ धर्मशास्त्र, पृ० 193 । यद्यपि हारीतः एतान् संस्कारत्वेन मनुते तथाप्येते संस्कारशब्देन साम्प्रतं नैवाख्यायन्ते ।

37- स्कन्ध पुराण, नागरखण्ड 6, अ० 239 श्लो० 31, तु०—आप० ध० 1.1.1.16-18 "स हि विद्यातस्तं जनयति । तच्छ्रेष्ठं जन्म । शरीरमेव मातापितरौ जनयतः । अत्रि० 141-142, सं० प्र०, पृ० 404, गौ० 1.9-11, दक्ष 1.3.4, वसिष्ठ 11.6

38- वि० ध० 28.40

ब्राह्मण्यमुन्मील्यते।[39] संस्कारैः संस्कृतो ब्राह्मणो ब्राह्मपदमवाप्नोति।[40] संस्काराणां महत्त्वं जन्मतः प्रागपि भवति।

मनुमते-गार्भादिसंस्कारैर्बैजिका गार्भिकाश्च दोषा दूरीक्रियन्ते। द्विजानां शरीरसंस्कारो वैदिकविधिविधानैरवश्यं विधेयः, यतः वेदादिस्वाध्यायेन व्रतैर्यज्ञैर्महायज्ञैश्चेयम् अब्राह्मी तनुर्ब्राह्मी जायते।[41]

रुद्रस्कन्देनाप्युक्तम् "एते गर्भाधानादयः संस्काराः शरीरं संस्कुर्वन्तः सर्वेषु अदृष्टार्थेषु कर्मसु योग्यतातिशयं कुर्वन्ति"[42] हारीतश्चैवमाह—"द्विविधः संस्कारो भवति ब्राह्मो दैवश्च।···ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां सलोकतां सायुज्यं गच्छति। दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां सायुज्यं गच्छति।"[43]

यद्यपि वस्तु संस्कारेण संस्कृतम् तन्मेध्यमिति कथ्यते। अतः शिक्षयाऽऽत्मसंस्कारः, ओषधिभिश्च शरीरसंस्कारो बुधजनैर्विधेयः। यथोक्तं दयानन्देन—

संस्कारैस्संस्कृतं यद्यन्मेध्यमत्र तदुच्यते।
असंस्कृतं तु यल्लोके तदमेध्यं प्रकीर्त्यते॥
अतः संस्कारकरणे क्रियतामुद्यमो बुधैः।
शिक्षयौषधिभिर्नित्यं सर्वथा सुखवर्धनः॥[44]

---

39- चित्रकर्म यथानेकै रङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वद् स्यात् संस्कारैर्विधिपूर्वकम्॥
वी० मि० भा० 1, पृ० 139

40- संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः।
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः॥ तदेव, पृ० 142

41- वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥
स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥
मनु० 2.26–28, तु०—याज्ञ० स्मृ० 1.13

42- खा० गृ० 11.3.33

43- स्मृ० चं०, भा० 1, पृ० 13

44- सं० वि०, पृ० 5

यथा प्रचुरप्रकृष्टधान्यावाप्तये उर्वरायां भूमौ उपयुक्तबीजानि विकीर्यन्ते तथैव सुसन्तानप्राप्तये विधिपूर्वकं गर्भाधानादिसंस्कार: क्रियते। यं निषेकाख्यं संस्कारं भौतिकवादिनो विषयतृप्तिसाधनमेव मन्यन्ते कतिपये च रूढिवादिनोऽचर्चनीयत्वेन परिगणयन्ति स खलु वैदिकसाहित्ये पवित्रयज्ञत्वेन परिगणित:।[45]

एकस्य प्रवृत्तिभी रुचिभिस्संस्कारैश्च अपरस्यापि प्रवृत्तिरुचि-संस्कारादय: परिवर्त्तन्त इति वेदारम्भादिसंस्कारपद्धत्या मानवनिर्माण-रहस्यं सर्वेषां सुविदितम्। प्रत्यक्षं न प्रमाणान्तरमपेक्षते। सुधीरप्य-सत्सु वसन् दुर्जनायते, कुधीश्च सत्सु निवसन् सुजनायत इति प्रत्यक्ष-विषय:।

इत्थं स्पष्टं यत् संस्कारा मानवजीवनं सामाजिकजीवनञ्चानि-वार्यतया प्रभावयन्ति।

## 7. संस्कारविधौ विवाहगृहाश्रमप्रकरणयो-र्वर्णिता: विषया:

स्वामिदयानन्देन संस्कारविधौ विवाहसंस्कारप्रकरणे गृहाश्रम-प्रकरणे चानेके उपादेयविषया: प्रतिपादिता:। यद्यपि विवाहसंस्कार-प्रकरणे प्राग्विध्युत्तरविधिविभागेन विधिविधानानामुल्लेख एवाधिक्ये-नोपलभ्यते तथापि तत्र विवाहसम्बद्धा:, कतिपयेऽन्यविषया अपि दृश्यन्ते। तत्र विवाहशब्दस्यार्थ: प्रकरणस्याऽऽरम्भ एव प्रदर्शित:। तदनु विवाहसंस्कारस्य पुष्ट्यै प्रमाणानि, नक्षत्रादिकल्पनानामप्रामा-ण्यञ्च प्रदर्शितम्। विवाहकालोऽपि प्रमाणपुरस्सरं तत्र प्रतिपादित:। विवाहयोग्या कन्या, अयोग्यकुलानि, विवाहानामष्टौ प्रकारा:, उत्तम-मध्यमाधमविवाहा:, निकटदूरविवाहे दोषादोषविवेचनं, युवविवाहे वैदिकप्रमाणानि, गुणकर्मानुसारं वर्णव्यवस्था, वधूवरपरीक्षादिविषया-श्चापि विविक्ता:। विवाहसंस्कारस्य सर्वे विधय: सप्रमाणं निरू-पिता:। वरवधूभ्यां पारिवारिकजनै: सह कथं व्यवहर्त्तव्यमित्यपि विवाहसंस्कारान्ते प्रतिपादितम्।

गृहाश्रमप्रकरणे गृहाश्रमस्य वास्तविकोऽर्थ:, तस्य प्रयोजनम्, गृहाश्रमे प्रमाणानि, पत्नीकर्त्तव्यम्, सन्तानोत्पत्ति:, पारिवारिक-जनानां पारस्परिकस्नेहसांमनस्यम्, गृहाश्रमे परिश्रमस्य महत्त्वम्,

45. द्र०—बृ० उ० 6.4.3

निरन्तरकर्माचरणम्, पतिपत्न्योः पारस्परिकसन्तुष्टिः, गृहाश्रममाहात्म्यम्, गृहस्थस्य कर्त्तव्यानि, नैत्यिककर्माणि, पञ्च महायज्ञाः, अन्त्येष्टयः, शालाकर्म, शाला-प्रवेशविधिः, चतुर्वर्णानां लक्षणं कर्त्तव्यानि च, शिष्टलक्षणम्, विद्वत्प्रशंसा, धर्मलक्षणम्, अधर्मलक्षणम्, सभालक्षणम्, धर्मपथावगमनम्, संगठनादिविषयाश्च विस्तरेण प्रतिपादिताः। एते विषयाः प्रस्तुतप्रबन्धे यथास्थानमाकलयिष्यन्ते।

## 8. स्वामिदयानन्दरचितेषु इतरग्रन्थेषु विवाह-गृहाश्रमविषये विचाराः

यथा स्वामिदयानन्दप्रणीतसंस्कारविधौ विवाहसंस्कारस्य विधिविधानानि गृहस्थस्य कर्त्तव्याकर्त्तव्यजातानि च सविस्तरं वर्णितानि तथैव स्वामिदयानन्दरचितेष्वितरबृहद्ग्रन्थेषु लघुग्रन्थेषु चापि विवाह-गृहस्थाश्रमविषयमधिकृत्य नैके विषयाः प्राप्यन्ते।

सत्यार्थप्रकाशे चतुर्थः सम्पूर्णसमुल्लास एव गृहस्थविषयमधिकृत्य वर्त्तते। तत्र गृहाश्रमप्रवेशः, विवाहयोग्या कन्या, दूरस्थविवाहे गुणाः, विवाहार्थं त्याज्यकुलानि, विवाहार्थम् आयुसीमा, विवाहप्रकाराः, गुणसाम्येन विवाहः, विवाहभेदाः, चतुर्वर्णानां कर्माणि गुणाश्च, गर्भाधानम्, गर्भकाले कर्त्तव्यानि, स्त्रीपुरुषयोर्व्यवहाराः, गृहस्थस्य कर्त्तव्यानि, पञ्चमहायज्ञविवेचनम्, पतिपत्न्योः पारस्परिकव्यवहाराः, धर्माचरणम्, धर्मसंग्रहप्रकारः, पुनर्विवाहदोषाः, नियोगविधानं तन्नियमाश्च, अगम्यागमनदोषाः, विवाहस्यावश्यकता, गृहाश्रमस्य ज्येष्ठता— इत्यादयो विषया विस्तरेण वर्णिताः। द्वितीयेऽपि समुल्लासे गृहस्थमधिकृत्य उत्तमसन्तानप्राप्तिप्रकारः, पुत्रजन्मानन्तरं मातापित्रोः कर्त्तव्यानि, मात्रा पुत्राय देयाः शिक्षा इत्यादिविषयाः प्रतिपादिताः।

ऋग्वेदादिभाष्यभूमिकायामपि विवाहविषये प्रकरणमेकं प्राप्यते। तत्र "गृभ्णामि ते सौभगत्वाय हस्तं", ऋ० 10.85.36, "इहैव स्तं मा वियौष्टम्", ऋ० 10.85.42 इति प्रमाणपुरस्सरम् एवं विवाहविधायका वेदेष्वनेके मन्त्राः सन्तीत्युद्घोषितम्। एतदतिरिक्तं तत्रत्यवर्णाश्रम-प्रकरणेऽपि गृहाश्रमविषये पञ्चमन्त्रा व्याख्याताः। तत्र प्रतिपादितं यद् गृहाश्रमानुष्ठानाज्जनैर्नैव भेतव्यम्। गृहाश्रमे स्थित्वा धर्मेण व्यवहर्त्तव्यम्, पापाश्च नाशयितव्याः। अयमाश्रमोऽतीवानन्दकरः। गृहाश्रमे निवसद्भिः पशुपृथिवीन्द्रियविद्याप्रकाशाह्लादादयः सर्वे पदार्थाः सम्यक्

प्राप्तव्याः, निश्श्रेयसमाभ्युदयिकञ्च सुखद्वयमपि तत्र भोक्तव्यम्, परोपकारभावनया च गृहाश्रमे स्थित्वा सुखस्योन्नतिः कार्या।

स्वरचितायां "भागवत-खण्डनम्" इत्याख्यायां संस्कृतपुस्तिकायामपि भागवतमतं मिथ्यापयता गृहस्थाश्रमोऽश्रेष्ठ इति कथनं प्रमत्तगीतमेवेति भणितम्।[46] "व्यवहारभानु"पुस्तके विवाहितस्त्रीपुरुषौ मिथः कथं वर्तेयातामिति प्रश्नोत्तरमाध्यमेन यदभिहितं तदपि संग्राह्यम्।[47] आर्याभिविनयेऽपि गृहस्थेन कर्त्तव्या काश्चन प्रार्थनाः मन्त्रपुरःसरं वर्णिताः।[48] पञ्चमहायज्ञविधौ गृहस्थेन पञ्चमहायज्ञाः केन प्रकारेण विधेया इति विस्तरेण प्रतिपादितम्।[49] आर्योद्देश्यरत्नमालायां गृहस्थाश्रमः सन्तानोत्पत्त्यै विद्यादिसर्वव्यवहारसिद्धये च भवतीति दिग् दर्शिता।[50]

महर्षिरचितम् ऋग्वेदभाष्यं, यजुर्वेदभाष्यं चापि गृहाश्रमविषये भूयसीं सामग्रीं प्राचुर्येण विकिरति। जिज्ञासुपाठकस्तत्र स्थले स्थले समुज्ज्वलान् गार्हस्थ्यविचारान् सरलतयैवाचिनोति। तत्र उषाः, अदितिः, इन्द्राणी, राका, सिनीवाली–इत्याद्या वैदिकदेव्यः स्त्रीपरत्वेन व्याख्याताः। इन्द्रसोमाश्विप्रभृतयो वैदिकदेवा अपि यत्र तत्र गृहस्थ-स्त्रीपुरुषादिरूपेण निर्वर्णिताः। तत्कृतानि वेदमन्त्रव्याख्यानानि प्रसङ्गान्तरेष्वस्माभिर्यथावसरं वर्णयिष्यन्त इति कृत्वाऽत्र विरम्यते।

## 9- स्वामिदयानन्दरचितसंस्कारविधेः प्रामाणिकता

न खल्वयं संस्कारविधिरित्याख्यो ग्रन्थः स्वामिदयानन्दस्य कपोलकल्पनाविलसितम्, अपितु विभिन्नगृह्यसूत्राणि मनुस्मृतिञ्चानुसृत्य पुस्तकमिदं विरचितम्। अत्यन्तोपयोगिनां षोडशसंस्काराणां क्रियाकलापवर्णनमत्र प्रमाणपुरःसरं वर्वर्त्ति। एतेन नूतनसंस्कारविधिरचनस्य प्रयोजनमपि प्रतिपादितं भवति। वेदादिविज्ञानविमुखैर्ये संस्कारविधानाभासाः कीर्तितास्तेषामपलापायेत्यर्थः। ग्रन्थारम्भे स्वयं ग्रन्थकारो ग्रन्थस्य प्रामाणिकतां बोधयति—

---

46- द्र०—द० ल० सं०, पृ० 474

47- तदेव, पृ० 522-23, 527-29

48- तदेव, पृ० 80-83

49- तदेव, पृ० 321-26, 334-43

50- तदेव, पृ० 576

वेदादिशास्त्रसिद्धान्तमाध्याय परमादरात् ।
आर्येतिह्यं पुरस्कृत्य शरीरात्मविशुद्धये ॥
कृतानीह विधानानि ग्रन्थग्रन्थनतत्परैः ।
वेदविज्ञानविरहैः स्वार्थिभिः परिमोहितैः ॥
प्रमाणैस्तान्यनादृत्य क्रियते वेदमानतः ।
जनानां सुखबोधाय संस्कारविधिरुत्तमः ॥[51]

संक्षेपेण निम्नग्रन्थानामुद्धरणानि संस्कारविधौ बहुत्रोपलभ्यन्ते—ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः, शपतथब्राह्मणम्, मन्त्रब्राह्मणम्, तैत्तिरीयारण्यकम्, छान्दोग्योपनिषद्, कठवल्ली, जाबालोपनिषद्, आपस्तम्बगृह्यसूत्रम्, आश्वलायनगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, पारस्करगृह्यसूत्रम्, मनुस्मृतिः, महाभारतम्, गीता, सुश्रुतम् ।

उपर्युक्तग्रन्थातिरिक्तं विविधेतरग्रन्थकाराणामाचार्याणाञ्चापि मतानि संस्कारविधौ समुद्धृतानि । यथा—नाकमौद्गल्याचार्यः, पृ० 129, पौरुशिष्टिः आचार्यः, पृ० 129, सत्यवचा रथीतर आचार्यः, पृ० 129, भर्तृहरिः, पृ० 265 ।

वैदिकमन्त्राणामुद्धरणानि सर्वसंस्कारेषु बाहुल्येन दृश्यन्ते । एवमशेषग्रन्थपारायणेन ज्ञातं भवति यन्न किमप्यत्र प्रमाणविरहितम् । पूर्वाचार्यैः प्रतिपादितानां कृत्यानां संस्काराणां विधिविधानानाञ्च विवेकपुरस्सरः संग्रहात्मकोऽयं ग्रन्थो महर्षिणा प्रणीतः ।

## 10. संस्कारविधेर्निर्माणकालः

महर्षिदयानन्देन स्वयं ग्रन्थनिर्माणकालस्य सूचना ग्रन्थारम्भे प्रदत्ता । यथा—

चक्षूरामाङ्कचन्द्रेऽब्दे कार्त्तिकस्यान्तिमे दले ।
अमायां शनिवारेऽयं ग्रन्थारम्भः कृतो मया ॥

चक्षुषी द्वे 2, रामाः त्रयः 3, अङ्काः नव 9, चन्द्रश्चैकः 1, । "अङ्कानां वामतो गतिः" इति न्यायेन 1932 तमविक्रमसंवत्सरे कार्त्तिकमासस्य अन्तिमे दले कृष्णपक्षे अमावास्यायां शनिवासरे ग्रन्थारम्भः कृतः ।

ग्रन्थसमाप्तिसूचनापि ग्रन्थान्ते ग्रन्थकारेण लिखिता । यथा—

नेत्ररामाङ्कचन्द्रेऽब्दे पौषमासे सिते दले ।
सप्तम्यां सोमवारेऽयं ग्रन्थः पूर्तिं गतः शुभः ॥[52]

---

51- सं० वि०, पृ० 5, श्लो० 3,6,7
52- अयं ग्रन्थसमाप्तिकालसूचकः श्लोकः श्रीरामलालकपूरट्रस्टसंस्करणे प्रकाशितो वर्तते । अजमेरीयप्रथमसंस्करणेऽपि प्रकाशितः, नान्यसंस्करणेषु ।

एतदनुसारं 1932 तमे विक्रमसंवत्सरे पौषमासस्य सिते दले शुक्लपक्षे सप्तमे दिवसे सोमवासरे ग्रन्थोऽयं पूर्तिमगात्। एवं ग्रन्थारम्भस्य ग्रन्थसमाप्तेश्च तिथ्या स्पष्टं भवति यद् ग्रन्थोऽयम् अष्टत्रिंशद्दिनेष्वेव समाप्तिं गतः। मुद्रणञ्चास्य 1933 तमविक्रमसंवत्सरस्यान्ते बम्बईस्थितएशियाटिकमुद्रणालये पूर्णत्वमाप्नोत्।

प्रथमसंस्करणलेखनात् सार्धसप्तवर्षानन्तरं स्वामिदयानन्देन संस्कारविधेः संशोधनं कृतमिति भूमिकातो ज्ञायते। पुनःसंस्करणविषये संस्कारविध्यारम्भे श्लोकोऽयं प्राप्यते—

विन्दुवेदाङ्कचन्द्रेऽब्दे शुचौ मासेऽसिते दले।
त्रयोदश्यां रवौ वारे पुनः संस्करणं कृतम्॥

श्रीयुतमहाराजविक्रमादित्यस्य 1940 तमे वर्षे आषाढमासस्य कृष्णपक्षे त्रयोदश्यां तिथौ रविवासरे पुनः संशोधनं कृतमित्यर्थः। संशोधनसमाप्तिश्च तस्यैव संवत्सरस्य भाद्रपदमासस्यामावास्यायामभवत्।[53] द्वितीयसंस्करणस्य मुद्रणसमाप्तिकालविषये निम्नश्लोकः प्राप्यते—

विधुयुगनवचन्द्रे वत्सरे विक्रमस्या-
सितदलबुधयुक्तानङ्गतिथ्यामिषस्य।
निगमपथशरण्ये भूय एवात्र यन्त्रे,
विधिविहितकृतीनां पद्धतिर्मुद्रिताऽभूत्॥[54]

एतदनुसारं द्वितीयसंस्करणस्य मुद्रणं 1941 तमविक्रमसंवत्सरस्य आश्विनमासस्य शुक्लपक्षस्य पञ्चम्यां तिथौ बुधवासरे पूर्णत्वं गतम्।[55]

प्रथमसंस्करणापेक्षया द्वितीयसंस्करणे जनसाधारणसौकर्यार्थं कश्चित् क्रमविपर्यासः, कस्यचिदनुपयोगिनो विषयस्य परित्यागः, कस्यचिदत्यन्तोपयोगिनो नूतनविषयस्य समावेशः कृत इति संस्कारविध्यारम्भे स्वयं महर्षिणैव लिखितायाः भूमिकातोऽध्यवसीयते।

---

53- द्र०—"ऋ० द० स० के पत्र और विज्ञापन", पृ० 475

54- अयं श्लोकः संस्कारविधेर्द्वितीयसंस्करणाद् द्वादशसंस्करणपर्यन्तं ग्रन्थान्ते पठितः।

55- निर्माणकालादिविषये द्र०, संस्कारविधेर्युधिष्ठिरमीमांसकेन विरचितं सम्पादकीयम्, पृ० 26-28, तद्रचित एव "ऋ० द० स० के ग्रन्थों का इतिहास" इत्याख्यो ग्रन्थश्च, पृ० 84-86

# द्वितीयोऽध्याय:

## 1- विवाहशब्दस्यार्थ:

वि उपसर्गात् वहधातो: घञ्प्रत्यये कृते विवाहशब्द: सिद्ध्यति। वहनं वाह:, विशिष्टो वाहो विवाह इति। "विवाह: विशिष्टं वहनम्" इति शब्दकल्पद्रुम:। यद्यपि विशिष्टं वहनं यस्य कस्यापि वस्तुन: सम्भवति तथापि विवाहशब्दो योगरूढित्वेन साम्प्रतं दारपरिग्रहार्थं एव प्रयुज्यते।

"क: पुनरयं विवाहो नाम? उपायत: प्राप्ताया: कन्याया दारकर्मणार्थः संस्कार:... पाणिग्रहणलक्षण:"[1] इति मेधातिथि:। "विवाह: भार्याप्राप्तिहेतु:"[2] इति कुल्लूकभट्ट:। "दारपरिग्रहे तज्जनके व्यापारे च" इति वाचस्पत्यम्। "उपयाम: परिणयनं पाणिग्रहणं विवाह उद्वाह:"[3] इति हलायुध:। सनियमं प्रसिद्धया स्वेच्छया पाणिग्रहणं विवाह:[4] इति, सन्तानोत्पत्तये, वर्णाश्रमानुकूलमुत्तमकर्मसिद्धये च स्त्रीपुरुषयो: सम्बन्धो विवाह इति च स्वामिदयानन्द:।[5]

निम्नवेदमन्त्रेष्वपि विवाहशब्दो विशिष्टवहनार्थे पाणिग्रहणलक्षणे पठित:—'यां संजभ्रु: सूर्याया विवाहे", अ० 12.1.14, "विवाहे कृत्यां यां चक्रु:", अ० 14.2.65 इति। "यं ईं वहाते यं ईं वा वरेयात्", ऋ० 10.27.11, "जाया पतिं वहति", ऋ० 10.32.3, "फल्गुनीषु व्युह्यते", ऋ० 10.85.7 इत्यादिभि: विवाहशब्दस्य वहधातुमूलत्वं प्रतिपाद्यते। वेदे 'वहतु" शब्दोऽपि प्राप्यते, यस्यार्थो विवाहे कन्यायै दातव्य: द्रव्यविशेष:, ऋ० 10.85.13,38, विवाह:, ऋ० 10.85.14 विवाहसंस्कार:[6], वहनहेतुस्तोत्रं, ऋ० 7.1.17, विवाहकर्ता, ऋ० 10.32.3, रथ:, अ० 14.2.1, (ग्रिफिथ) आडम्बर:, अ० 14.1.13 (ग्रिफिथ) इति भाष्यकृद्भिर्विहित:।

1- मनु० 3.20 भाष्ये।
2- तत्रैव।
3- हला० 495।
4- स्वमन्त०, संख्या 46, अनु०।
5- सं० वि०, पृ० 141, अनु०।
6- वैदिक इण्डेक्स, पृ० 278।

पाणिग्रहणलक्षणे संस्कारेऽपि विवाहशब्दः प्रयुज्यते । विशेषेण वहति पतिर्जायां यत्र स विवाह इति ।

## 2. धर्मशास्त्रेषु विवाहस्य महत्त्वम्

विवाहः खल्वेकः पवित्रो यज्ञः । यो जनः पत्नीं विवाह्य गृहस्थाश्रमं न प्राविशत् स अयज्ञिय इत्युच्यते स्म—"अयज्ञियो वा एष योऽपत्नीकः" ।[7] एकाकी पुरुषोऽसम्पूर्णो भवति, पत्नीसहितस्यैव तस्य सम्पूर्णता जायते—"अथो अर्द्धो वा एष आत्मनः यत् पत्नी", "यावन्न विन्दते जायां तावदर्धो भवेत् पुमान्" ।[8] विवाहपूर्वकं सन्तानोत्पत्तिं विना मानवः पितृ-ऋणान्नैव मुच्यते । उक्तं यथा—"जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" ।[9] शतपथब्राह्मणकारोऽप्याह—"अर्धो ह वा एष आत्मनो यज्जाया, तस्माद् यावज्जायां न विन्दते नैव तावत् प्रजायते, असर्वो हि तावद् भवति । अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्वो भवति" ।[10] आरण्यकेऽपि प्रोक्तम्—"तस्मात् पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते" इति ।[11]

अपत्नीकः पुरुषः कर्माधिकारी न भवति, यतः पत्नी धर्मार्थकामानां मुख्यकारणमिति स्मर्यते । यथोक्तम्—

पत्नी धर्मार्थकामानां कारणं प्रवरं स्मृतम् ।
अपत्नीको नरो भूप कर्मयोग्यो न जायते ।
ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽपि वा नरः ।।[12]

गृह्यसूत्राणि विवाहस्य महत्त्वं प्राचुर्येण वर्णयन्ति । गृह्यसूत्राणामारम्भोऽपि प्रायशो विवाहसंस्कारवर्णनपुरःसरमेव वर्त्तते । विवाहसंस्कार एवाशेषगृह्ययज्ञानां संस्काराणाञ्चोद्गमस्थलम् ।

उपनिषत्स्वपि विवाहस्य माहात्म्यं वर्णितम् ।[13] "प्रजातन्तुं मा व्यवच्छेत्सीः" ।[14] क्रमेणैव सर्वं आश्रमाः प्रवेष्टव्या भवन्तीति स्मृति-

---

7- तै० ब्रा० 2.2.2.6
8- तै० ब्रा० 2.9.4.7, व्या० स्मृ० 2.14
9- तै० सं० 6.3.10.5
10- श० ब्रा० 5.2.1.10
11- ऐ० आ० 1.2.5
12- या० स्मृ० 1.51, अपरार्कटीकायामुद्धृतम् ।
13- बृ० उप० 6.4, ऐ० उप०, अ० 2
14- तै० उप० 1.11.1

काराणां मतम्। मनुमते आयुषश्चतुर्थभागमाद्यं गुरुकुले उषित्वा द्वितीयभागे विवाह्य पत्नीसहितेन गृहे वस्तव्यम्।[15] यज्ञक्रियाणां दाराधीनत्वाद् विवाहः प्रशस्तोऽभिमतः। यथाह कश्यपः—

दाराधीनाः क्रियाः सर्वा ब्राह्मणानां विशेषतः।
दारान् सर्वप्रयत्नेन विशुद्धानुद्वहेत्ततः॥[16]

वेदेष्वपि "देवा अग्रे न्यपद्यन्त पत्नीः", "प्रजां कृण्वाथाम्", "जनियन्ति नावग्रवः पुत्रीयन्ति सुदानवः", अ० 14.2.32,37,72 इत्यादिमन्त्रैर्विवाहकर्मणः स्तुतिर्विहिता।

## 3. विवाहकालः

विवाहकालविषये स्वामिदयानन्देन संस्कारविधौ आश्वलायनगृह्यसूत्रस्य प्रमाणमिदं समुद्धृतम्—"उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः। सार्वकालमेके विवाहम्।[17] उत्तरायणकाले शुक्लपक्षे, शुभदिने च विवाहः कर्त्तव्य इति सामान्यनियमः। परं नैतदनिवार्यं यदुत्तरायणस्य शुक्लपक्ष एव विवाहः स्यात्। अतो विकल्पमाह। सौविध्यानुसारं कस्मिन्नपि काले विवाहः संभवतीति। नक्षत्रादिविचारः स्वामिनो नाभिमतः।

"उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्" इति कात्यायनः। "शुक्लपक्षं प्रशंसन्ति विवाहे गौतमादयः" इति नारदः। "सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः" इति गर्गः। "सर्वं ऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम्" इत्यापस्तम्बः। "सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्जमित्येके" इति बौधायनः।[18]

## 4. विवाहकाले वरवध्वोः आयुःसीमा

वरवध्वोः आयुःसीमानं विषयीकृत्य सत्यार्थप्रकाशे संस्कारविधौ च स्वामिदयानन्दस्येदमभिमतं दृश्यते—आषोडशाच्चतुर्विंशतिवर्षपर्यन्तं कन्यायाः, आपंचविंशादष्टाचत्वारिंशद्वर्षपर्यन्तं च पुरुषस्य विवाहकाल

15- मनु० 4.1
16- कृत्यकल्पतरौ विवाहप्रकरणे उद्धृतम्।
17- आ० गृ० 1.4.1–2
18- कृत्यकल्पतरौ विवाहप्रकरणे उद्धृतम्।

उत्तमः ।[19] वरस्यायुः स्त्रिया अपेक्षया न्यूनान्न्यूनं सार्धैकगुणमधिकतमञ्च द्विगुणं भवेत् ।[20]

स्वामिना ब्रह्मचर्यं त्रिविधं स्वीकृतम्—कनिष्ठं, मध्यमम् उत्तमं च। चतुर्विंशतिवर्षपर्यन्तं कनिष्ठं, चतुश्चत्वारिंशद्वर्षवयःपर्यन्तं मध्यमम्, अष्टचत्वारिंशद्वर्षावधिकम् उत्तमम् ।[21] 25 वर्षीयः पुरुषः, 16 वर्षीया च कन्या यदा परस्परं विवहतः, सोऽयम् अधमो विवाहः। 17 वर्षीयायाः 18 वर्षीयाया वा कन्यायाः, त्रिंशद्वर्षीयस्य अष्टत्रिंशद्वर्षीयस्य वा पुरुषस्य च विवाहो मध्यमः। आविंशाच्चतुर्विंशतिवर्षवयस्का कन्या ततो द्विगुणितायुष्कश्च पुरुषो यदा विवहेतां तदा सर्वोत्तमो विवाहः कीर्त्यते ।[22]

सत्यार्थप्रकाशस्य तृतीये समुल्लासे संस्कारविधौ च वेदारम्भप्रकरणे सुश्रुतस्याधोलिखितानि प्रमाणानि महर्षिरुपन्यस्यति—

"चतस्रोऽवस्थाः शरीरस्य वृद्धिर्यौवनं सम्पूर्णता किञ्चित्परिहाणिश्चेति। तत्राषोडशाद् वृद्धिः। आपञ्चविंशतेर्यौवनम्। आचत्वारिंशतस्सम्पूर्णता। ततः किञ्चित्परिहाणिश्चेति।" "पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे। समत्वागतवीर्यौ तु जानीयात् कुशलो भिषक् ।"[23]

अस्मिन् प्रकरणे सुश्रुतस्यैव निम्ननिर्दिष्टं श्लोकद्वयमपि प्रमाणम्—
"ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम्। यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते। जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः। तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ।।[24]

विवाहस्य आयुःसीमानं विषयीकृत्य स्वामिदयानन्देन स्ववेदभाष्येष्वपि बहु लिखितम्। यथा—"स्वस्वपुत्रान् न्यूनान्न्यूनं पञ्चविंशतिवर्षमितेनाऽधिकादधिकेनाऽष्टचत्वारिंशद्वर्षमितेनैवं न्यूनान्न्यूनेन षोडशवर्षेणाधिकादधिकेन चतुर्विंशतिवर्षमितेन च ब्रह्मचर्येण स्वस्वकन्याश्च पूर्णविद्याः सुशिक्षिताश्च संपाद्य स्वयंवराख्यविधानेनैतैर्विवाहः कर्त्तव्यो यतः सर्वे सदा सुखिनः स्युः ।।"[25]

---

19- स० प्र०, पृ० 118
20- सं० वि०, पृ० 40–41, 142
21- स० प्र०, पृ० 68-69
22- सं० वि०, पृ० 120-123
23- सु० सू०, अ० 35.25, 35.10
24- सुश्रुत, सूत्रस्थान, अ० 10.47-48
25- ऋ० 1.45.1, भावार्थः, द्र०-ऋ० 2,35.4,6, 5.37.3; 5.41.7, द.भा.

"यदि कुमाराः कुमार्यश्च ब्रह्मचर्येण विद्यामधीत्य सन्तानोत्पत्तिं विज्ञाय पूर्णायां युवावस्थायां स्वयंवरं विवाहं कृत्वा सन्तानोत्पत्तिं कुर्वन्ति तर्हि ते सदाऽऽनन्दिता भवन्ति ॥"[26] "हे कन्या यूयं बाल्यावस्थायामाशेषषोडशाद्वर्षात् प्रागापञ्चविंशाद् वर्षाच्च कुमारा विवाहं मा कुरुत । य एवं ब्रह्मचर्यानन्तरं विवाहं कुर्युस्तेषामपत्यानि रूपगुणान्वितानि चिरञ्जीवीनि शिष्टसम्मतानि जायन्ते ॥"[27] "यदि कन्या बालकांश्च पितरौ ब्रह्मचर्येण विद्याः प्रापयेयुः पूर्णयुवावस्थायां विवाहयेयुस्तर्हि तेऽत्यन्तं सुखमाप्नुयुः ।"[28] "याः कन्या आद्ये वयसि आषोडशादाचतुर्विंशद्वर्षंब्रह्मचर्येण विद्यासुशिक्षाः प्राप्य स्वसदृशानां पत्न्यः स्युस्ताः दिश इव सुप्रकाशितकीर्त्तयो भवन्ति ॥"[29]

वैदिकप्रमाणैरपीदमेव सिद्ध्यति यद् युवावस्थायामेव वरवध्वोर्विवाहः स्यात् । ऋग्वेदस्य निम्नमन्त्रे जलवन्निर्मलाः सदाचारिण्यः प्रसन्नवदना युवतयो युवानं पुरुषं प्राप्नुवन्तीति वर्णितम्—

तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।
स शुक्रेभिः शिक्वभी रेवदस्मे दीदायानिध्मो घृतनिर्णिगप्सु ॥
ऋ० 2.35.4

"अप्यू नु पत्नीर्वृषणो जगम्युः", ऋ० 1.179.1, वृषणः सेक्तारः युवान इति यावत् पुरुषा एवं पत्नीः भार्याः जगम्युः भृशं प्राप्नुयुः । अयं मन्त्रोऽपि सेचनसमर्थानां तरुणानामेव पुरुषाणां विवाहं समर्थयति । किंच "सूर्यां यत्पत्ये शंसन्तीं मनसा सविता ददात्", ऋ० 10.85.9, अस्य भाष्ये सायणः प्राह—पत्ये शंसन्तीम्, पतिं कामयमानाम्, प्राप्तयौवनामित्यर्थः । अथर्ववेदस्य प्रीतिसंजनन, 6.89, अनुराधन, 6.102, स्मर, 6.131, सूक्तैरपि युवविवाहोऽनुमोद्यते । यतः प्रेमोदयो युवावस्थायामेव भवति न तु बाल्यावस्थायाम् ।" "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्" इत्याद्या अन्येऽपि मन्त्रा युवतेर्यूनश्चैव विवाहं स्वीकुर्वन्ति ।

## 5- विवाहभेदाः

महर्षिदयानन्देन संस्कारविधौ विवाहप्रकरणे मनुप्रमाणपुरस्सरं

26- ऋ० 5.2.1, भावार्थः
27- ऋ० 5.2.2, भावार्थः
28- ऋ० 5.3.9, भावार्थः
29- यजु० 23,36, भावार्थः

ब्राह्मदैवार्षप्राजापत्यासुरगान्धर्वराक्षसपैशाचाख्या अष्टौ विवाहप्रकाराः परिगणिताः। तेषां लक्षणानि—

**ब्राह्मः**—आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्। आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः, इति मनुः। ब्राह्मो विद्याचरित्रबन्धुशील-संपन्नाय दद्यादाच्छाद्यालंकृताम्, इति गौतमः। ब्राह्मे विवाहे बन्धुशीललक्षण-संपन्नश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य, इत्यापस्तम्बः। श्रुतिशीले विज्ञाय ब्रह्मचारिणेऽर्थिने कन्या दीयते स ब्राह्मः, इति बौधायनः।[30]

**दैवः**—यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते। अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते, इति मनुः। अन्तर्वेद्यृत्विजे दानं दैवोऽलंकृत्य, इति गौतमः। दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत्, इत्यापस्तम्बः। दक्षिणासु नीयमानास्वन्तर्वेद्यृत्विजे स दैवः, इति बौधायनः।[31]

**आर्षः**—एकं गोमिथुनं द्वे वा वरादादाय धर्मतः। कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते, इति मनुः। आर्षे गोमिथुनं कन्यावते दद्यात्, इति गौतमः। आर्षे दुहितृमते मिथुनौ गावौ देयौ, इत्यापस्तम्बः। पूर्वां लाजाहुतिं हुत्वा गोमिथुनं कन्यावते दत्त्वा ग्रहणमार्षः, इति बौधायनः।[32]

**प्राजापत्यः**—सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च। कन्याप्रदान-मभ्यर्च्य प्राजापत्यो विधिः स्मृतः, इति मनुः। संयोगमन्त्रः प्राजापत्ये स धर्मश्चर्यतामिति, इति गौतमः। आच्छाद्यालङ्कृत्यैषा सहधर्मं चर्यतामिति, प्राजापत्यः, इति बौधायनः।[33]

**आसुरः**—ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः। कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते, इति मनुः। वित्तेनाऽऽनतिः स्त्रीमतामसुरः, इति गौतमः। शक्तिविषयेण द्रव्याणि दत्त्वाऽऽवहेरन् स आसुरः, इत्यापस्तम्बः। धनेनोपतोष्याऽऽसुरः, इति बौधायनः।[34]

**गान्धर्वः**—इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुनः कामसम्भवः, इति मनुः। इच्छन्त्याः स्वयं संयोगो गान्धर्वः, इति

30- मनु० 3.27, गौ० ध० 1.4.4, आप० ध० 2.11.17, बौ० ध० 1.11.2
31- मनु० 3.28, गौ० ध० 1.4.7, आप० ध० 2.11.19, बौ० ध० 1.11.5
32- मनु० 3.29, गौ० ध० 1.4.6, आप० ध० 2.11.18, बौ० ध० 1.11.4
33- मनु० 3.30, गौ० ध० 1.4.5, बौ० ध० 1.11.3
34- मनु० 3.31, गौ० ध० 1.4.9, आप० ध० 2.12.1, बौ० ध० 1.11.7

गौतमः। मिथः कामात् सांवर्तेते स गान्धर्वः, इत्यापस्तम्बः। सकामेन सकामायां मिथस्संयोगो गान्धर्वः, इति बौधायनः।[35]

**राक्षसः**—हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्। प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते, इति मनुः। प्रसह्याऽऽदानाद्राक्षसः, इति गौतमः। दुहितृमतः प्रोथयित्वाऽऽवहेरन् स राक्षसः, इत्यापस्तम्बः। प्रसह्य हरणाद्राक्षसः, इति बौधायनः।[36]

**पैशाचः**—सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः, इति मनुः। असंविज्ञातोपसंगमात् पैशाचः, इति गौतमः। सुप्तां मत्तां प्रमत्तां वोपयच्छेदिति पैशाचः, इति बौधायनः।[37]

एते अष्टौ विवाहप्रकाराः शङ्खबौधायनस्मृत्योः आश्वलायन-गृह्यसूत्रे चापि लभ्यन्ते।[38]

यद्यपि शास्त्रकारैर्विभिन्नविवाहप्रकारा विस्तरेण वर्णितास्तथापि शास्त्रेष्वेषां विवाहानां निश्चितः क्रमो नैवावाप्यते। संख्यापि सर्वत्र न समाना। आपस्तम्बे वसिष्ठे च धर्मसूत्रे षट्प्रकारा एवोल्लिखिताः। पैशाचप्राजापत्ययोस्तत्रोल्लेखो न विद्यते। वसिष्ठधर्मसूत्रम् अन्तिमौ द्वौ विवाहौ मानुषनाम्ना, प्राजापत्यविवाहं च क्षात्रनाम्ना परिगण-यति। मानवगृह्यसूत्रानुसारं द्वौ भेदौ विवाहस्य—ब्राह्मः शौल्क्यश्च। महाभारतं तावत् पञ्चैव भेदान् लक्षयति—ब्राह्मः, क्षात्रः, गान्धर्वः, आसुरः, राक्षस इति।[39]

**विवाहानां श्रेष्ठतायास्तारतम्यम्**—

एषु तावदष्टविवाहेषु प्रथमाश्चत्वारः प्रशस्ता अन्तिमाश्च निन्दिता इति धर्मशास्त्रानुकूलं महर्षिदयानन्दस्य मतम्। तथाहि मनुः—ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥ इतरेषु च शिष्टेषु नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः

35- मनु० 3.32, गौ० ध० 1.4.8, आप० ध० 2.11.20, बौ० ध० 1.11.6
36- मनु० 3.33, गौ० ध० 1.4.10, आप० ध० 2.12.2, बौ० ध० 1.11.8
37- मनु० 3.34, गौ० ध० 1.4.11, बौ० ध० 1.11.9
38- शंङ्ख० स्मृ०, अ० 4, बौ० स्मृ० प्रश्न 1 अ० 11, आश्व० गृ० 1.6.1
39- महा०, अनु० पर्व, अ० 44

सुताः ॥ अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा। निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान् विवर्जयेत् ॥[40]

वर्तमानमनुस्मृतौ ब्राह्मणादिवर्णानुसारमपि विवाहानां धर्म्याधर्म्यत्वं प्रशस्ताप्रशस्तत्वं च प्राप्यते। ब्राह्मणस्य कृते आद्याः षड्विवाहप्रकारा धर्म्याः, तेष्वपि च प्रथमाश्चत्वारः प्रशस्ताः। क्षत्रियस्यान्तिमाश्चत्वारो धर्म्याः, तेष्वपि राक्षसः प्रशस्तः। वैश्यशूद्रयोस्तु आसुरगान्धर्वपैशाचा धर्म्याः, आसुरश्च प्रशस्तः तत्रापि प्राजापत्यासुरगान्धर्वराक्षसपैशाचेषु पञ्चसु प्राजापत्यागन्धर्वराक्षसविवाहा धर्म्या अभिमताः, आसुरपैशाचौ च द्वौ अधर्म्यौ स्मृतौ।[41]

परं विधानमेतल्लोकानुरोधात् प्रतीयते, तद्विधायकानां श्लोकानां च प्रक्षिप्तत्वमपि प्रतिभाति। यतो हि विवाहानां गुणावगुणत्वं तावत्, "यो यस्यैषां विवाहानां मनुना कीर्तितो गुणः। सर्वं शृणुत तं विप्राः", मनु० 3.36 इत्यादि श्लोकादेव प्रारभ्यते। उक्तं च वृत्तं ततः पूर्वं 23-25 श्लोकेषु प्राप्यते। अतः केनचिल्लोकपरिपाटीमनुसृत्य तत्र निवेशितमिति प्रतीयते।

अन्यैरपि शास्त्रकारैर्ब्राह्मणादिवर्णानुकूल्येन क्वचिद् विवाहानां प्रशस्ताप्रशस्तत्वं प्रतिपादितम्। यथा—"तेषां चत्वारः पूर्वे ब्राह्मणस्य तेष्वपि पूर्वः पूर्वश्श्रेयान्। उत्तरेषामुत्तरोत्तरः पापीयान्। अत्राऽपि षष्ठसप्तमौ क्षत्रधर्मानुगतौ तत्प्रत्ययत्वात् क्षत्रस्येति। पञ्चमाष्टमौ वैश्यशूद्राणाम्। अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति कर्षणशुश्रूषाधिकृतत्वात्। गान्धर्वमप्येके प्रशंसन्ति सर्वेषां स्नेहानुगतत्वात्", बौ० ध० 1.11.10-16, "तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्", आप० ध० 2.5.12.3, "चत्वारो धर्म्याः प्रथमाः", गौ० ध० 1.4.12, इति।

प्रशस्ता विवाहा एव समाजेऽङ्गीकार्याः, निन्दिताश्च परिहरणीयाः यतो हि "यथायुक्तो विवाहस्तथायुक्ता प्रजा भवति।" आप० ध० 2.5.12.4

## 6- विवाहार्थं वरवध्वोर्योग्यता

योग्यतायां शरीर-गुण-कर्म-स्वभाव-रूप-शिक्षा-कुलादिकं विचारणीयं भवति। तद्विषये कन्याया वरस्यापि च विवाहयोग्यता बहुर्चचिता शास्त्रेषु।

---

40- मनु० 3.39-42

41- मनु० 3.23-25

**कन्यायोग्यता: —**

शतपथब्राह्मणम् शारीरिकदृष्ट्या पृथुश्रोणिं, विस्तृतकुचां, क्षीणमध्याञ्च योषां प्रशंसति।[42] आश्वलायनगृह्यसूत्रे—बुद्धिरूपशील-लक्षणसम्पन्नाम् अरोगाञ्च कन्यां विवाहेदित्युल्लिखितम्।[43] भारद्वाज-गृह्यसूत्रानुसारं विवाहप्रसङ्गे चतुर्विषयेष्वेव विचार: कार्य:। तन्मते वित्तं, रूपं, प्रज्ञा, बान्धवमिति चत्वारि विवाहकारणानि।[44] क्रोध-रहितां, हर्षयुतां, महिषीं, अनन्यपूर्वां, यवीयसीं भार्यां विन्देत इति वाराहगृह्यसूत्रकारस्य मतम्।[45] मनुस्मृतौ अव्यङ्गाङ्गी, सौम्यनाम्नी, हंसवारणगामिनी, तनुलोमकेशवदना, मृद्वङ्गी च स्त्री उद्वाहयोग्या वर्णिता। शारीरिकदृष्ट्या कपिला, अधिकाङ्गी, रोगिणी, अलोमिका, अतिलोमा, वाचाला, पिङ्गला च कन्या अविवाह्या भवति। अशुभ-नाम्न्योऽपि स्त्रियः परिहर्तव्या मन्यन्ते। नक्षत्र-तरु-नदी-म्लेच्छ-पर्वत-पक्षि-सर्प-दास-भयानकनामिकां कन्यां नोद्वहेत्। मनुस्मृतौ कन्याया व्यक्तिगतपरीक्षातिरिक्तं कुलपरीक्षाऽपि वर्णिता। गो-अजा-अवि-धनधान्यत: समृद्धानि महान्त्यपि कुलानि हेयानि भवन्ति यत्र जातकर्मादिसंस्कारक्रिया नैव विधीयन्ते, स्त्रिय एव यत्र जायन्ते, वेदानामनध्यायो यत्र, बहुदीर्घरोमान्विता: पुरुषा यत्र जनिं लभन्ते, अर्शोव्याधिर्यत्र तिष्ठति, राजयक्ष्म-मन्दानल-व्यपस्मार-चित्रकुष्ठाद्या आमयाश्च यत्र संजाता:। अथ च यस्या भ्राता न भवेत् पिता वा न विज्ञायेत तामपि पुत्रिकाधर्मशङ्कया नोद्वहेत्।[46]

लक्षण्याम्, अनन्यपूर्विकां, कान्ताम्, असपिण्डां, यवीयसीम्, अचिकित्सनीयव्याध्यनुपसृष्टां, भ्रातृमतीम्, असमानार्षगोत्रजां, मातृत: पञ्चमात् पितृतश्च सप्तमादूर्ध्वंकुलां, श्वित्रकुष्ठापस्मारप्रभृतिसंचारि-रोगदोषासमन्वितां कन्यामाहरेदिति याज्ञवल्क्य:।[47]

आपस्तम्बानुसारं सुप्तां रुदन्तीं निष्क्रान्तां वरणे परिवर्जयेत्। दत्तां गुप्तां द्योताम् ऋषभां शरगां विनतां विकटां मुण्डां मण्डूषिकां

42- श० ब्रा० 1.2.5.16
43- आश्व० गृ० 1.5.3
44- भा० गृ० 1.6
45- वा० गृ० 10.1
46- मनु० 3.6-11
47- या० स्मृ० 1.52-54

साङ्कारिकां रातां पालीं मित्रां स्वनुजां वर्षंकारीं च वर्जयेत्।[48] नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः। सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत्॥ बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत। यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके।[49]

महर्षिदयानन्देन संस्कारविधौ मनुस्मृतिमनुसृत्य कन्यायोग्यताः प्रदर्शिताः।[50] तदतिरिक्तं यथाप्रसङ्गं स्ववेदभाष्ये मन्त्राणां भावार्थेऽपि काश्चन योग्यताः स्फुटीकृताः। तदनुसारं या कन्या ब्रह्मचर्यविद्यासंयोगा, सौभाग्यकारिणी, विदुषी, उषर्गुणवद्वर्तमाना, प्रशंसितसौन्दर्यशुभलक्षणलक्षिता, अनवद्यशास्त्रविज्ञाने रममाणा, शुभगुणकर्मस्वभावा, ब्रह्मचारिणी, मेघस्वना, मितभाषिणी, पवित्रा, हृद्या, वरसदृशी, गृहीतशिक्षा, रूपलावण्यादिशुभगुणाढ्या, दुःखध्वंसिका, सुखजनयित्री, सुखप्रदा, सुहृद्वदाज्ञानुकारिणी, सेविका, अद्वेषिणी, सत्यवाक्, प्रशंसिता, प्रिया, सुलक्षणा, पतिव्रता, सर्वाङ्गैः सुन्दरी, अद्भुतरूपा, बहुप्रजोत्पादयित्री, बलिष्ठा, विचक्षणा, धनैश्वर्यवर्धिका, धनरक्षणे तत्परा, शूरवीरोत्पादयित्री, सहनशीला, भूमिवत् क्षमान्विता, अन्तरिक्षवदक्षोभा, यन्त्रवज्जितेन्द्रिया, क्रूरतादिदोषरहिता, अन्येषामपि दोषनिवारिका

---

48- वरेषु वरणार्थं प्राप्तेषु या कन्या स्वपिति रोदिति निष्क्रामति वा गृहात् ताम्। दत्ता वाचान्यस्मै दत्ता। गुप्ता प्रयत्नेन रक्ष्यमाणा दुश्शीला वा सा भवति अशुभलक्षणा वा। द्योता विषमदृष्टिः। ऋषभा ऋषभशीला। शरभा अतिदर्शनीया जारास्तां कामयेरन् सा च तान्। विनता विनतगात्रा, कुब्जा वा। विकटा विस्तीर्णजङ्घा। मुण्डा अपनीतकेशा। मण्डूषिका मण्डूकत्वक् अश्लक्ष्णेत्यर्थः वामनेत्यन्ये। सांकारिका कुलान्तरे जाता कुलान्तरस्यापत्यत्वं गता वा, यस्यां वा गर्भावस्थायां माता अस्थिसञ्चितवती। राता रतिशीला। पाली वत्सादीनां पालयित्री। मित्रा मित्रवती बहुमित्रेत्यर्थः, स्वयं वा मित्रभूता। स्वनुजा यस्या अनुजा शोभना स्वयंदर्शनीया सा स्वनुजा, वरजननादूर्ध्वमल्पीयसि काले जाता तस्मिन्नेव संवत्सरे जातेत्यन्ये। वर्षंकारी वर्षणाधिका वर्षंकारी स्वेदनशीला इत्यन्ये इति हरदत्तः।

49- आप० गृ० 1.3.11-14, 19, 21

50- मनु० 3.6-11 एतेषां श्लोकानामभिप्रायोऽस्माभिः प्राक् प्रदर्शितः।

भवेत् सैव विवाहयोग्या भवति।[51] यथोक्तम्—"हे ब्रह्मचारिणो या ब्रह्मचारिण्यो मेघस्वना मितभाषिण्यः पवित्रा विदुष्यः स्युस्ता एव पूर्वं सम्परीक्ष्य वोढव्याः॥" "हे पुरुषा याः कन्याः स्वसदृश्यो विदुष्यः शुभगुणकर्मस्वभावाः स्युस्ता एव भार्यात्वायाङ्गीकार्या॥" "हे मनुष्या या गृहीतशिक्षा रूपलावण्यादिशुभ-गुणाढ्या विदुष्यो ब्रह्मचारिण्यः स्युस्ता एव यथायोग्यं विवहन्तु॥" "हे मनुष्या या उषर्वद्वर्तमानाः सत्यशास्त्रश्रवणादियुक्ता बलिष्ठा विचक्षणा धनैश्वर्यवर्धिका रक्षणे तत्परा विदुष्यः स्त्रियः स्युस्तासां मध्यात् स्वस्वप्रियां भार्यां सर्वे गृह्णन्तु॥" "या स्त्री विद्याशिक्षायुक्तां वाचं गृह्णाति साऽन्नादिभूतां वेदविद्यां वेत्तुमर्हति, सा येन सह विवाहं कुर्यात्तस्याऽहोभाग्यं भवतीति विज्ञेयम्॥[52] शारीरिकदृष्ट्या कन्या वरापेक्षया तनीयसी तत्स्कन्धमिता च भवेदित्युक्तं महर्षिणा।[53]

**वरयोग्यताः—**

आश्वलायनगृह्यसूत्रानुसारम्—"बुद्धिमते कन्यां प्रयच्छेदिति" वरस्य धीमत्त्वमावश्यकम्। वरस्य गुणसंपत्सु बन्धुत्व-शील-लक्षणसंपन्नता श्रुतवत्ताऽनामयत्वञ्चानिवार्याणि भवन्तीत्यापस्तम्बः। वाराहगृह्यसूत्रं तावत् वरयोग्यतासु निम्नविवाहगुणान् परिगणयति—वित्तं रूपं विद्या प्रज्ञा बान्धवमिति। तत्राऽपि च एकाऽलाभे वित्तं विसृजेत्, द्वितीयालाभे रूपं, तृतीयालाभे विद्यां, प्रज्ञायां तु बान्धवा विवदन्ते। विनीतक्रोधाय सहर्षाय च वराय हर्षिता भार्या प्रदेया। अन्यविशेषेषु सम्पत्तिसौन्दर्य-विद्याबुद्धिकुलेषु पूर्वंपूर्वापेक्षया परः परः श्रेयान् इति। गौतमानुसारं विद्याचारित्र्यबन्धुशीलसम्पन्नाय कन्यां दद्यात्। "कुलं च शीलं वपुर्वयश्च विद्यां च वित्तं च सनाथताञ्च। एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्" इति यमः।[54]

वरयोग्यतासु प्रमुखतमो विशेषो ब्रह्मचर्यसमाप्तिरेवेति मनूक्तिः—अखण्डब्रह्मचर्यपूर्वकं यथाक्रमं वेदान्, वेदौ, वेदं वाधीत्य, गुरुणा

51- ऋ० 1.49.1-2,4; 127.1; 179.4; 188.8; 4.14.3; 49.7; 51.2-6, 8-9; 52.1.3-4; 6.49.7; 61.1; 65.3; 7.56.5; यजु० 14.21-22; 35.21

52- ऋ० 4.51.2-3,9; 6.65.3; 61.1

53- सं० वि०, पृ० 152

54- आश्व० गृ० 1.5.2; आप० गृ० 1.3.20; वा० गृ० 10.1,5-7; वी० मि० भा० 2, पृ० 751

दत्तानुज्ञः, कृतस्नानसमावर्त्तनो ब्रह्मचारी एव वरयोग्यतामवाप्य गृहप्रवेशाधिकारी जायते।[55]

कन्याया ये गुणा उक्तास्ते प्रायेण वरेऽपि द्रष्टव्याः इति याज्ञवल्क्यः। तदतिरिक्तं च तन्मते सवर्णं उत्कृष्टवर्णो वा न तु हीनवर्णः, श्रोत्रियः स्वयं श्रुताध्ययनसम्पन्नः, यत्नात् प्रयत्नेन पुंस्त्वेऽनपुंसकत्वे च परीक्षितः, युवा, धीमान्, लौकिकवैदिकव्यवहारेषु निपुणमतिः, जनप्रियः, स्मितपूर्वंमृद्वभिभाषणादिभिरनुरक्तजन एव वरणयोग्यो भवति।[56]

स्वामिदयानन्दमतेन वधूवरौ तुल्यशीलौ, समानबुद्धी, समानाचारौ, समानरूपादिगुणौ, अहिंसकौ, सत्यमधुरभाषिणौ, कृतज्ञौ, दयालू, निर्लोभौ, देशसुधार-विद्याग्रहण-सत्योपदेशकरणे निर्भयौ, सोत्साहौ, त्यक्ताहंकारमात्सर्येर्ष्याकामक्रोधकपटद्यूतचौर्यमद्यमांसाहारादिदोषौ, गृहकार्यचतुरौ च स्याताम्।[57] स्वामिदयानन्दस्य वेदभाष्येष्वपि वरस्य कन्यायाश्च योग्यताविषये विचारा उपलभ्यन्ते। यथा—"स विवाह उत्तमतमो यत्र समानरूपशीलौ कन्यावरौ स्यातां परन्तु कन्यापेक्षा वरस्य बलायुषी द्विगुणे सार्द्धैकगुणे वा भवेताम्।" "ब्रह्मचारिणी प्रसिद्धकीर्तिं सत्पुरुषं सुशीलं शुभगुणरूपसमन्वितं प्रीतिमन्तं पतिं ग्रहीतुमिच्छेत्तथैव ब्रह्मचार्यपि स्वसदृशीमेव ब्रह्मचारिणीं स्त्रियं गृह्णीयात्।" "स्त्री ऋतुगामिकमूर्ध्वरेतसं सुशीलं विद्वांसं प्रसिद्धकीर्तिं जनं पतित्वाय गृह्णीयात्।" "विवाहकामनया युवत्या स्त्रिया यच्छलकपटाचरणरहितः सत्यभावप्रकाशक एकस्त्रीव्रतो जितेन्द्रिय उद्योगी धार्मिको दाता विद्वान् भवेत्, तमुपयम्य निरन्तरमानन्दितव्यम्।" "यस्य शुभगुणशीलेषु महती प्रशंसा यस्योत्कृष्टं शरीरात्मबलं भवेत् तं पुरुषं स्त्री पतित्वाय वृणुयात् एवं पुरुषोऽपीदृशीं स्त्रियं भार्यात्वाय स्वीकुर्यात्।"[58]

## 7- विवाहः केषु जायेत ?

स्वामिदयानन्देन सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे मनुस्मृतिप्रमाणपुरस्सरं या कन्या सवर्णा, मातृकुलानां षष्ठादूर्ध्वकुला (असपिण्डा), पितुरसगोत्रा, दूरदेशस्था च भवेत् तां पुरुषो विवाहे-

---

55- मनु० 3.2-4

56- याज्ञ० स्मृ० 1.55

57- सं० वि०, पृ० 152

58- ऋ० 1.56.3; 5.32.11-12; यजु० 8.2; ऋ० 1.127.1

दित्युक्तम्, भिन्नगोत्रयोर्भिन्नमातापितृकुलयोर्दूरस्थयोश्च स्त्रीपुरुषयोर्विवाह उत्तमो भवतीत्यतः।[59] सवर्णता च तयोर्गुणकर्मस्वभावसाम्येनैव परीक्ष्यते न तु जन्मना।[60] शूद्रकुलोत्पन्नः पुरुषस्तादृशी स्त्री वा श्रेष्ठगुणकर्मस्वभावैर्ब्राह्मणक्षत्रियवैश्यवर्णत्वमापद्यते, ब्राह्मणकुलोत्पन्नश्च पुरुषस्तादृशी स्त्री वा दुष्टगुणकर्मस्वभावैः शूद्रवर्णत्वम्। इयं वर्णव्यवस्था कन्यानां षोडशे वर्षे पुरुषाणाञ्च पञ्चविंशे वर्षे निश्चिता भवति। अनयैव वर्णव्यवस्थया ब्राह्मणस्य ब्राह्मण्या क्षत्रियस्य क्षत्रियया वैश्यस्य वैश्यया शूद्रस्य च शूद्रया विवाहेन भवितव्यम्।[61] स्वामिदयानन्देन दूरदेशविवाहो बहु समर्थितः।[62] सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे "दुहिता दुर्हिता दूरे हिता भवतीति", नि० 3.4, निरुक्तप्रमाणपुरस्सरं दूरदेशविवाहस्य गुणा विस्तरेण प्रोक्ताः। तत्रोक्तम्—बाल्यावस्थायां ययोर्बालकबालिकयोः सख्यं भवति तयोः परस्परं विवाहे स्नेहो नैवोपजायते, यतो बाल्यक्रीडाकलहगुणदोषस्वभावविपरीताचरणनग्नत्वाद्या ज्ञातपूर्वा भवन्ति। यथा जले जलमिश्रणेन विलक्षणगुणो नैव समुत्पद्यते तथैव सगोत्रे सपिण्डे च विवाहे धातूनामपरिवर्त्तनादुन्नतिरप्यवरुध्यते। यथा दुग्धं शुण्ठ्याद्योषधियोगादुत्तमतां भजते तथा सगोत्रयोरसपिण्डयोश्च विवाहः सर्वोत्तमः। दूरदेशविवाहे जलवायुपरिवर्त्तनं, रोगहानिः, अविरोधः, प्रेमवृद्धिश्च भवति।

स्वामिना वेदभाष्येऽपि निम्नमन्त्रस्य व्याख्या दूरदेशविवाहसमर्थने विहिता—परमस्याः परावतो रोहिदश्व इहागहि। पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः॥ यजु० 11.72, हे अग्ने पावक इव तेजस्विन् स्वामिन्! रोहिदश्वः रोहितोऽग्न्यादयोऽश्वा वाहनानि यस्य सः, पुरीष्यः पुरीषेषु पालनेषु साधुः, पुरुप्रियः पुरूणां बहूनां जनानां मध्ये प्रियः प्रीतः, त्वम् इह परावतः दूरदेशात्, परमस्याः अत्युत्तमगुणरूपशीलायाः कन्यायाः कीर्त्तिं श्रुत्वा आगहि आगच्छ। तया प्राप्तया कन्यया सह मृधः परपदार्थाभिकांक्षिणः शत्रून्, तर उल्लंघ।[63] 'मनुष्यैः स्वस्याः कन्यायाः पुत्रस्य वा समीपदेशे विवाहः कदाचिन्नैव कार्यः। यावद् दूरे विवाहः क्रियते तावदेवाऽधिकं सुखं जायते निकटे कलह एव" इति भावार्थः।

59- स० प्र०, पृ० 114-16
60- स० प्र०, पृ० 129, सं० वि०, पृ० 151-52
61- स० प्र०, पृ० 130
62- द्र०—स० प्र०, समु० 4, सं० वि०, पृ० 147
63- स्वामिदयानन्दभाष्यस्यान्वयपदार्थानुसारिणी व्याख्या।

वेदेषु सपिण्डयोरपि वरवध्वोर्विवाहो निषिद्धः। सपिण्डः एकपिण्डः एकदेह इत्यर्थः। पुत्रपौत्रादिषु मातापितृदेहयो रक्ताद्यंशाः भवन्ति। तेन पुत्रपौत्रादयः मातापित्रोः सपिण्डाः कथ्यन्ते। अत एव पितृपुत्रयोः, मातृपुत्रयोः, भ्रातृभगिन्योः, पितृव्यमातुलादीनां पुत्रपुत्रीणाञ्च विवाहः सपिण्डविवाह इत्युच्यते। स च वेदेषु प्रतिषिद्धः—"न ते सखा सख्यं वष्ट्येतत्", ऋ० 10.10.2 इति। यमाख्यो भ्राता यम्याख्यां भगिनीं प्रति कथयति यदहं त्वया सह स्त्रीपुरुषलक्षणं[64] सख्यं नैव चिकीर्षामि। किञ्च—तस्यैव सूक्तस्य "न वा उ ते तन्वा तन्वं सं पपृच्यां पापमाहुर्यः स्वसारं निगच्छात्। अन्येन मत् प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत्॥" "अन्येन मदाहनो याहि तूयं तेन विवृह रथ्येव चक्रा।" "उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्।" इत्यादिभिः प्रमाणैरपि सपिण्डानां विवाहनिषेधः समर्थितो भवति।

ब्राह्मणानि, गृह्यसूत्राणि, स्मृतयश्चापि प्रस्तुतविषयमधिकृत्य बहु प्रतिपादयन्ति। एषां मते असमानगोत्रप्रवरपिण्डयोः सवर्णयोश्च वरवध्वोर्विवाहः सम्पादयितव्यः। ब्राह्मणवर्णः पुरुषः ब्राह्मणवर्णामेव स्त्रियमुद्वहेत्। परं विश्वामित्रगोत्रीयो ब्राह्मणः विश्वामित्रगोत्रीयां ब्राह्मणीं परित्यज्य तदितरां ब्राह्मणवर्णां वसिष्ठजमदग्निभारद्वाज-गौतमात्रिकश्यपगोत्रां कन्यां विवहेत्।

शतपथब्राह्मणे प्रस्तुतविषये संक्षिप्तवर्णनं लभ्यते—"समानादेव पुरुषादत्ता आद्यश्च जायेते इमे हि चतुर्थे पुरुषे तृतीये संगच्छामहे इति विदेवं दीव्यमाना जात्या आसते।"[65] "समानाद् अभिन्नाद् पुरुषाद् अत्ता च भोक्ता च आद्यश्च भोग्यश्च—भर्ता च भार्या च जायेते।···ते क्व पुनः सङ्गच्छामह इत्याहुः, किमनन्तर एव पुरुषे? नेत्याह—चतुर्थे तृतीये वा।···ते हि मातुलदुहितृषु पितृष्वसुपुत्रेषु सङ्गच्छन्ते" इति तद्भाष्ये सायणः।

"असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" इति मनुः।[66] सपिण्डता च तन्मते सप्तमे पुरुषे विनिवर्तते।[67] आपस्तम्बमते—सगोत्राय दुहितरं न प्रयच्छेत्। मातुः पितुश्च योनिसम्बन्धेभ्योऽपि

64- "सख्यं स्त्रीपुरुषलक्षणं सख्यम्" इति सायणः।

65- श० ब्रा० 1.8.3.6

66- मनु० 3.5

67- तदेव 5.60

कन्यां नैव दद्यात्।[68] याज्ञवल्क्योऽपि असपिण्डां, असमानार्षगोत्रजां मातृतः पञ्चमात् पितृतः सप्तमाच्चोर्ध्वंकुलादुत्पन्नां कन्यां विवहेदिति मनुते।[69] मानवगोभिलहिरण्यकेश्याश्वलायनगृह्यसूत्रेषु वसिष्ठधर्मसूत्रे चापीदमेव मतं प्रतिपादितम्।[70] व्यासगौतमशङ्खनारदकात्यायनशातातपबौधायनपैठीनसिहारीतविष्णुसुमन्त्वादीनामाचार्याणामपीदमेव मतम्।[71]

## 8- वरवध्वोर्वरणपद्धतिः

विवाहार्थं वरवध्वोर्वरणं कया रीत्या स्यादिति विषयमधिकृत्य सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे प्रश्नोत्तरमाध्यमेनोल्लेखो वर्त्तते।[72] तत्रेदं विवेचितं यद्वरवध्वोरुभयोरधीनं वरणं स्यात्। यदि पितरौ विवाहे प्रयत्नशीलौ स्यातां तदानीमपि वरवध्वोः स्वीकृतिं विना वरणं नैव भवेत्। यत ईदृश एव विवाहे परस्परमविरोधः हर्षश्च वर्धते। विवाहे मुख्यप्रयोजनं वरवध्वोर्भवति न तु सम्बन्धिनाम्। अतः प्राचीनस्वयंवरपरम्परयैव विवाहो भवेदिति स्वामिदयानन्दस्याभिमतम्। परमस्मिन् वरणविधौ सम्बन्धिनः सहायकाः स्युरित्यपि स्वामिना स्वीकृतम्। तत्रोक्तम्—यदा ब्रह्मचर्याश्रमसमाप्तिकालो निकटे भवेत् तदा कुमाराणां कुमारीणाञ्च छायाचित्राण्यध्यापिकानाम् अध्यापकानाञ्चान्तिकं प्रेष्येरन्। सहैव तेषामैतिह्यमपि स्यात्। गुणकर्मस्वभावानुरूपञ्च ययोर्बालकबालिकयोर्विवाहमध्यापका इच्छेयुस्तयोर्वृत्तं ताभ्यां ज्ञापयेयुः। यद्युभयोर्विवाहस्येच्छा भवेत्तदा तयोर्विवाहः कारयितव्य इति तस्याभिप्रायः।[73]

स्वरचितवेदभाष्येष्वपि स्वामिना बहुत्र स्वयंवरविवाहपद्धतिरेव समर्थिता, सम्बन्धिनश्च सहायका एव स्वीकृताः। यथोक्तम्—"कन्या वरश्च स्वप्रियं पुरुषं स्वकान्तां कन्यां च स्वयं परीक्ष्य स्वीकर्त्तुमिच्छेत्। यदा

68- आप० ध० 1.11.15-16

69- याज० स्मृ० 1.52-53

70- मा० गृ० 3.5; गो० गृ० 3.4.4-5; हि० गृ० 1 19.2; आश्व० गृ० 1.7.8; व० ध० 8.1

71- कृत्यकल्पतरुग्रन्थस्य गृहस्थप्रकरणे उद्धृतम्।

72- द्र०—स०प्र०, समु० 4, पृ० 121

73- स० प्र०, समु० 4, पृ० 135

द्वयोर्विवाहकरणे निश्चयः स्यात् तदैव मातापिताचार्यादय एतयोर्विवाहं कुर्युः।[74] ऋग्वेदे स्पष्टमुक्तम्—"भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित्", ऋ० 10.27.12। "वधूः स्वयं आत्मनैव जनमध्येऽवस्थितं पतिं वनुते। स्वयंवरधर्मेण प्रार्थयते" इति तद्भाष्ये सायणः।

ऋग्वेदे यथा स्वयंवरपद्धत्याः समर्थनमुपलभ्यते तथैव विवाहार्थं वरपक्षीयबन्धुजनानां सहयोगस्यापि वर्णनं दृश्यते। यथा—सोमस्य सूर्यायाश्च परस्परं विवाहे अश्विनौ, अग्निः सविता, विश्वेदेवाश्च सहायका भवन्ति। यथोक्तम्—सोमो वधूयुरभवदश्विनास्तामुभा वरा। सूर्यां यत्पत्ये शंसन्तीं मनसा सविता तदात्॥ यदश्विना पृच्छमानावयातं त्रिचक्रेण वहतुं सूर्यायाः। विश्वेदेवा अमु तद्वामजानन् पुत्रः पितरावंवृणीत पूषा॥ ऋग्० 10.85.9, 14

## 9- वाग्दान (वरण) विधिः

संस्कारविधौ यद्यपि वाग्दानशब्दो न प्रयुक्तस्तथापि तत्र तद्विधिरेवं वर्णितः—वरवध्वोः परीक्षानन्तरं यदा परस्परं सहमतिर्भवेत्तदनन्तरं विद्वत्स्त्रीपुरुषाणां सभामाहूय निम्ननिर्दिष्टं मन्त्रं तौ पठेताम्— "ओम् ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम्। यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यताम्॥ यत्सत्यं तद् दृश्यताम्॥"[75] प्रस्तुतमन्त्रस्य भावार्थं महर्षिरेवं प्राह—सृष्ट्यादौ ऋतं महत्तत्वं समुत्पन्नम्, तस्मिन् महत्तत्त्वे सत्यं नाशरहितं त्रिगुणात्मकं जगत् प्रतिष्ठितमासीत्। यथा पुरुषप्रकृतियोगेन निखिलं विश्वं समुत्पन्नं तथाऽहं कुमारी कुमारश्च साम्प्रतं विवाहप्रतिज्ञां कुर्वः। आवां स्वप्रतिज्ञां सत्यापयितुं दृढोत्साहिनौ स्थास्यावः।[76]

गृह्यसूत्राणां मते कन्यावरणार्थं पुरुषः पित्रादिकन्यावरयितॄन् सुहृदः बन्धूंश्च प्रस्थापयेत्—यूयं मह्यं कन्यां वृणीध्वमिति।[77] तदा च व्रजतो वरकान् अनुमन्त्रयेत निम्नमन्त्रेण—"अनृक्षरा ऋजवः सन्तु पन्था

74- यजु० भा० 11.64, भावार्थः। स्वामिभाष्ये स्वयवरसमर्थनाय एतेषां मन्त्राणां भावार्थोऽपि द्रष्टव्यः—ऋ० 1.167.6; 5.42.12; 6.64.6; यजु० 8.1; 5.9; 14.8; 15.54; 23.37

75- आश्व० गृ० 1.5.5

76- द्र०—सं० वि०, पृ० 153

77- आप० गृ० 2.4.1; शां० गृ० 1.6.1; गो० गृ० 2.1.2

येभिः सखायो यन्ति नो वरेयम् । समर्यमा सम्भगो नो निनीयात् सं जास्पत्यं सुयममस्तु देवाः ॥"[78] हे देवाः विद्वांसः ! नः अस्माकं सखायः बान्धवाः वरेयं वरैर्याचितव्यं पितरं प्रति येभिः यैः पथिभिः यन्ति गच्छन्ति ते पन्थाः पन्थानः अनृक्षराः कण्टकरहिताः, ऋजवः अकुटिलाश्च सन्तु । अर्यमा भगश्च नः अस्मान् सं निनीयात् सम्यक् कन्यां प्रापयेत् । आवयोः जास्पत्यं जायापतित्वं च सुयमं सुदृढम् अस्तु भवत्विति भावः । बौधायनगृह्यसूत्रं वाग्दानविधौ निम्नमन्त्रं विनियुङ्क्ते—"प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वरा अभि षु प्रसीदतः । अस्माकमिन्द्र उभयं जुजोषति यत् सोम्यस्यान्धसो बुबोधति ॥"[79] शाङ्खायन-गृह्यसूत्रं वाग्दानविधिं विस्तरेण वर्णयति ।[80] तन्मते—उभयतः वर-वध्वोः सम्बन्धे रुचिते सति पुष्पाक्षतयवहिरण्यमिश्रितजलपरिपूर्णकलशं सर्वे स्पृशन्ति निम्नमन्त्रेण—"अनाधृष्टमस्यनाधृष्ट्यं देवानामोजोऽनभिशस्त्य-भिशस्तिपा अनभिशस्तेऽन्यमञ्जसा सत्यपुपगेषं सुविते मा धाः ॥"[81] काठक-गृह्यसूत्रानुसारं वाग्दानकाले वधूस्वीकृत्यनन्तरम् ऋत्विग् निम्नमन्त्रौ पठति—"समाना व आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ सं वो मनांसि सं व्रता समु चित्तान्यकरम् । अमी ये विव्रताः स्थन तान्नः सन्नमयामसि ॥"[82] अन्यैराधुनिकपण्डितैरपि वाग्दानविधिः स्वग्रन्थेषु प्रदर्शितः ।[83]

## 10- प्रमुखगृह्यसूत्रेषु विवाहसंस्कारविधयः

विभिन्नगृह्यसूत्रेषु विवाहसंस्कारस्य विभिन्नविधयः प्रतिपादिताः । तत्र विधिभिन्नता बाहुल्येन प्राप्यते, विधिषु न्यूनाधिक्यमपि परिलक्ष्यते,

78- ऋ० 10.85.23; वारा० गृ० 10.8-9; शां० गृ० 1.6.1; आप० गृ० 2.4.2

79- ऋ० 10.32.1; बौ० गृ० 1.1.14

80- शां० गृ० 1.6.1-6

81- वा० सं० 5.5; तै० सं० 1.2.10 2, 6.2.2.3; मै० सं० 1.2.7; का० गृ० 2.8

82- का० गृ० 15.5

83- संस्कारचन्द्रिकायां पं० हरिदत्तशास्त्रिणा वाग्दानकाले पठनीयमन्त्रा वेदेभ्यः संगृहीताः । वाग्दानविधिश्चापि प्रदर्शितः । तत्तत्र द्रष्टव्यम् । पौराणिक-वाग्दानविधिस्तु महामहोपाध्यायश्रीनित्यानन्दपन्तपर्वतीयप्रणीतसंस्कारदीप-काख्ये ग्रन्थे द्रष्टव्यः ।

मन्त्राणां विनियोगोऽपि क्वचिद् भिन्नत्वेन कृतः। अत्र प्रमुखगृह्यसूत्रेषु प्रयुज्यमानानां विधीनां सूची दीयते।

**आश्वलायनगृह्यसूत्रम्**—1. पाणिग्रहणम्, 2. अग्निपरिक्रमणम्, 3. अश्मारोहणम्, 4. लाजाहोमः, 5. शिखाविमुञ्चनम्, 6. सप्तपदी, 7. मूर्धाभिषिञ्चनम्, 8. ध्रुवादिदर्शनम्, 9. यानारोहणम्, 10. नावारोहणम्, 11. उदकादुत्तारणम्, 12. वधूरोदने मन्त्रपाठः, 13. कल्याणेषु देशेषु (देशवृक्षचतुष्पथादिषु) मन्त्रजापः, 14. मार्गे सुमङ्गलीदर्शनम्, 15. गृहप्रवेशः, 16. वृषभचर्मारोहणम्, 17. चतस्राज्याहुतयः, 18. दधिप्राशनम्, 19. आज्येन हृदयाञ्जनम्, 20. नियतकालं ब्रह्मचर्यधारणम्, 21. वधूवस्त्रदानम्, 22. ब्राह्मणेभ्योऽन्नदानम्, 23. स्वस्तिवाचनम्।

**बौधायनगृह्यसूत्रम्**—1. वरप्रेक्षणम्, 2. ब्राह्मणेभ्यो भोजनदानम्, 3. विवाहहोमः, 4. वरस्य वधूगृहप्रयाणम्, 5. समीक्षणम्, 6. पाणिग्रहणम्, 7. सप्तपदी, 8. अर्घ्यम्, 9. मधुपर्कः, 10. अलङ्करणम्, 11. हृदयस्पर्शः, 12. कर्णजपः, 13. पुनः पाणिग्रहणम्, 14. अग्निप्रदक्षिणा, 15. अश्मारोहणम्, 16. उद्वाहः, 17. गृहप्रवेशः, 18. वृषभचर्मोपवेशनम्, 19. ध्रुवादिदर्शनम्, 20. त्रिरात्रव्रतम्, 21. चतुर्थीकर्म।

**आपस्तम्बगृह्यसूत्रम्**—1. वरवध्वोरासनग्रहणम्, 2. पाणिग्रहणम्, 3. सप्तपदी, 4. अग्निप्रदक्षिणा, 5. अश्मारोहणम्, 6. लाजाहोमः, 7. जयाहोमः, 8. वधूप्रस्थानम्, 9. रथारोहणम्, 10. रथोत्तम्भनम्. 11. सूत्रोपरिगमनम्, 12. मार्गे मन्त्रपाठः, 13. नावारोहणम्, 14. श्मशानादौ मन्त्रपाठः, 15. अन्यनिमित्तेषु मन्त्रपाठः, 16. वध्वा वरगृहदर्शनम्; 17. गृहप्रवेशः, 18. वध्वोरुपस्थे शिशुस्थापना, 19. ध्रुवादिदर्शनम्, 20. आज्यभागाहुतयः, 2·. स्थालीपाकयज्ञः, 22. त्रिरात्रव्रतम्, 23. चतुर्थीकर्म।

**पारस्करगृह्यसूत्रम्**—1. अर्घ्यम्, 2. मधुपर्कः, 3. वस्त्रपरिधानम्, 4. समञ्जनम्, 5. वध्वा सह गृहान्निष्क्रमणम्, 6. समीक्षणम्, 7. अग्निप्रदक्षिणा, 8. वैवाहिकहोमः (आज्यराष्ट्रभृज्जयाभ्यातानाहुतयः), 9. लाजाहोमः, 10. पाणिग्रहणम्, 11. अश्मारोहणम्, 12. गाथागानम्, 13. अग्निपरिक्रमा, 14. शिष्टलाजाहोमः, 15. सप्तपदी, 16. मूर्धाभिषेकः, 17. सूर्यदर्शनम्, 18. हृदयस्पर्शः, 19. अभिमन्त्रणम्,

20. वृषभचर्मारोहणम्, 21. ग्रामवचनानुसारमन्यप्रचलितविषयः, 22. आचार्यदक्षिणा, 23. ध्रुवदर्शनम्, 24. त्रिरात्रव्रतम्, 25. आवसथ्यहोमः, 26. उद्वाहनम्, 27. चतुर्थीकर्म, 28. मूर्धाभिषिञ्चनम् 29. स्थालीपाकप्रेक्षणम्, 30. पातिव्रत्योपदेशः, 31. गर्भाधानम् ।

गोभिलगृह्यसूत्रम्—1. कन्यायाः स्नानम्, 2. अग्निस्थापना, 3. कलशपुरुषस्थापना, 4. लाजाशूर्पस्थापनम्, 5. शिलास्थापनम्, 6. वरद्वारा वधूदत्तवस्त्रधारणम्, 7. वधूमग्निसमीपमानयनम् पत्या मन्त्रजापश्च, 8. कटं पदा प्रवर्त्तयन्त्या वध्वा मन्त्रपाठः, 9. अजपन्त्यां वध्वां पतिद्वारा मन्त्रपाठः, 10. वध्वा वरस्य दक्षिणांसस्पर्शः, 11. षडाज्याहुतयः, 12. चतस्रो व्याहृत्याहुतयः, 13. वरद्वारा वध्वा अञ्जलिग्रहणम्, 14. अश्मारोहणम्, 15. लाजाहोमः, 16. अग्निप्रदक्षिणा, 17. शिष्टलाजाहुतिः, 18. सप्तपदी, 19. समुङ्गलीप्रदर्शनम्, 20. वरवध्वोर्मूर्धाभिषिञ्चनम्, 21. पाणिग्रहणम्, 22. वध्वा उद्वहनम्, 23. वृषभचर्मारोहणम् षडाज्याहुतयश्च, 24. वध्वाः शिरसि यज्ञशिष्टाज्यस्यावपातनम्, 25. ध्रुवदर्शनम्, 26. अरुन्धतीदर्शनम्, 27. अभिवादनम्, 28. त्रिरात्रव्रतम्, 29. वरायार्घ्यदानम्, 30. हविष्यभोजनम्, 31. स्थालीपाकनिर्माणं, स्थालीपाकाहुतयः, स्थालीपाकाभिमृशनम्, स्थालीपाकभक्षणञ्च, 32. गोदानम्, 33. यानारोहणम्, 34. भययुक्तस्थानेषु मन्त्रपाठः, 35. अक्षादिभङ्गे अन्यापत्सु च विवाहाग्नौ व्याहृत्याहुतिदानम्, आज्यशेषेण चाभ्यञ्जनम्, 36. वामदेव्यगानम्, 37. वध्वा गृहप्रविष्टे वृषभचर्मण्युपवेशनम्, तदुपस्थे शिशुस्थापनम्, शिशोर्हस्ते फलदानम्, अष्टाज्याहुतयश्च, 38. गुरूणामभिवादनम्, 39. चतुर्थीकर्म ।

शांखायनवाराहखादिरजैमिनीयाग्निवेश्यकाठककौषीतकिभारद्वाजमानववैखानसलोगाक्षीहिरण्यकेशिगृह्यसूत्रेष्वपि प्रायश उपर्युक्ता एव विषयो वर्णिताः। विस्तरेण ते तत्रैव द्रष्टव्याः।

## 11- संस्कारविधौ स्वीकृता विषयः

स्वामिदयानन्दकृतसंस्कारविधौ प्रायेण गोभिलपारस्कराश्वलायनगृह्यसूत्राण्यनुसृत्य विषयः प्रतिपादिताः। स्वामिना यत्र तत्र विधिभिन्नत्वं स्वयमपि प्रतिपादितम्। तन्मते—

**प्राग्विधिः**—संस्कारात् प्राग् वरवध्वोः स्वस्वगृहेषु कर्त्तव्या विषयः—कन्यावरयोः स्नानं वस्त्रधारणम् च, ईश्वरस्तुतिप्रार्थनोपासना। वरस्य कन्यागृहं प्रति गमनम्। कन्याद्वारा वरसत्कारः—आसनदानम्, पाद्यार्घ्याचमनादिदानम्, मधुपर्कदानं वरद्वारा मधुपर्केक्षणं मधुपर्कालोडनं मधुपर्कविक्षेपणं मधुपर्कभक्षणञ्च। पुनराचमनम्। गोदानम्। कन्यादानम्। वरद्वारा वध्वै वस्त्रप्रदानम्। वरद्वारा स्वयं वस्त्रपरिधानम्। अग्निप्रदीपनम्। जलकलशपुरुषस्थापना। दण्डपुरुषस्थापना। शिलास्थापनम्। कुशानस्थापनम्। लाजाशूर्पधारिणो वधूभ्रातुः पूर्वाभिमुखमुपवेशनम्। समञ्जनम्। वरद्वारा स्वदक्षिणहस्तेन वध्वा दक्षिणहस्तं गृहीत्वा तया सह गृहाद्बहिर्यज्ञमण्डपे आगमनम्। वरवधूभ्यां यज्ञकुण्डस्य प्रदक्षिणा। वरवधूभ्याम् आसनग्रहणम्। विवाहयज्ञारम्भः—पुरोहितस्थापना, आचमनम्, अग्न्याधानम्, समिदाधानम्, कुण्डं परितो जलसेचनम्, चतस्र आघारावाज्यभागाहुतयः, चतस्रो व्याहृत्याहुतयः, अष्टाज्याहुतयः। प्रधानहोमः—वधूद्वारा वरस्य दक्षिणांसस्पर्शः, पञ्चाज्याहुतयः, राष्ट्रभृदाहुतयः, जयाहोमः, अभ्यातानहोमः, द्वादशाज्याहुतयः। पाणिग्रहणम्। कलशपुरुषसमेतं वरवधूद्वारा यज्ञकुण्डस्य प्रदक्षिणा। प्रतिज्ञाग्रहणम्। शिलारोहणम्। लाजाहोमः। यज्ञकुण्डस्य चतस्रः प्रदक्षिणाः। शिष्टलाजाहुतयः। घृताहुतिः। केशविमोचनम्। सप्तपदी। कलशपुरुषद्वारा वरवध्वोर्मस्तिष्के जलसेचनम्। सूर्यावलोकनम्। हृदयस्पर्शः। वधूदर्शनमाशीश्च। स्विष्टकृदाहुतिः। चतस्र आज्याहुतयः।

**उत्तरविधिः**—अग्न्याधानम्। समिदाधानम्। चतस्र आघारावाज्यभागाहुतयः। चतस्रो व्याहृत्याहुतयः। प्रधानहोमः—षडाज्याहुतयः, चतस्रो व्याहृत्याहुतयः। ध्रुवदर्शनम्। अरुन्धतीदर्शनम्। वरद्वारा वधूमस्तकं संस्पृश्य ध्रुवीभावाशंसनम्। पुनराचमनम्, अग्निप्रदीपनम्, समिदाधानम्, अष्टाज्याहुतयश्च। भक्ताहुतयः। स्विष्टकृदाहुतिः। द्वादश आज्याहुतयः। वरवधूद्वारा ओदनभक्षणम्। महावामदेव्यगानम्। ईश्वरस्तुतिप्रार्थनोपासना, स्वस्तिवाचनम्, शान्तिकरणम्, अतिथिभ्यो भोजनम्। चतुर्थीकर्म। वध्वा वरगृहप्रयाणम्—अश्रुप्रमार्जनम्, रथारोहणं प्रयाणञ्च, नावारोहणं ततोऽवतरणञ्च, भयान्वितस्थानेषु पठनीयो मन्त्रः, आपत्सु मार्गे विवाहाग्निप्रज्वलनम्, आहुतयः, वाम-

देव्यगानञ्च । वरगृहे वध्वाः स्वागतम् । यज्ञायोजनम्—सामान्यहोमः प्रधानहोमश्च, दधिप्राशनम्, अभिवादनम्, वामदेव्यगानम् ईश्वरोपासना च, स्वस्तिवाचनम् आशीश्च, अभ्यागतसत्कारः ।

एवमत्र विवाहसम्बन्धिसामान्यविचाराः पर्यालोचिताः । इतोऽग्रे स्वामिदयानन्दकृतसंस्कारविधौ प्राप्यमाणाः प्रारम्भिकविधयो व्याख्यास्यन्ते ।

o:—:o

# तृतीयोऽध्यायः

## 1· संस्कारात् प्राग् वरवध्वोः स्वस्वगृहेषु कर्तव्या विधयः

विवाहसंस्कारात् प्राग् वधूवरौ स्वस्वगृहेषु स्नानविधिं सम्पादयतः। स्नानानन्तरं सुवस्त्रालङ्कृता वधूः स्वगृहे उत्तमासने पूर्वाभिमुखमुपविशति। ततः ईश्वरस्तुतिप्रार्थनोपासनाम्, स्वस्तिवाचनम्, शान्तिकरणञ्च सर्वे सम्मिल्य सम्पादयन्ति। पश्चाद् अग्न्याधानं समिदाधानं च कुर्वन्ति, स्थालीपाकादीनि च यथोक्तं सम्पाद्य वेद्याः समीपे स्थापयन्ति। वरोऽपि स्वगृहे सुवस्त्राणि धारयित्वा, यज्ञशालामागत्य, उत्तमासने पूर्वाभिमुखमुपविश्य, ईश्वरस्तुतिप्रार्थनोपासनां कृत्वा वधूगृहं गन्तुं सज्जो भवति।

**स्नानविधिः—**

वरवधूभ्यां स्वस्वगृहे सुवासितजलेन निम्नमन्त्राणां जपपुरस्सरं स्नानं क्रियते—

ओं काम वेद ते नाम मदो नामासि समानयामुं सुरा ते अभवत्।
परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा॥ 1॥
ओं इमं त उपस्थं मधुना संसृजामि प्रजापतेर्मुखमेतत् द्वितीयम्।
तेन पुंसोऽभिभवासि सर्वानवशान् वशिन्यसि राज्ञि स्वाहा॥ 2॥
ओं अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः।
तेनाज्यमकृण्वंस्त्रैश्रृङ्गं त्वाष्ट्र त्वयि तद्दधातु स्वाहा॥ 3॥

**मन्त्रार्थः**—हे काम, तव नाम वेद सर्वोऽपि जानाति, त्वं मदः मदकारी वर्त्तसे, ते तव इयं कन्या अयं पुरुषो वा सुरा मदसाधनभूतो वर्त्तते, अमुं कन्यां पुरुषं वा सम्मानय मानयुतं कुरु। अत्र जगति ते तव परम् उत्कृटं जन्म विद्यते। त्वम् अग्रे सृष्ट्यादौ तपसः तपोरूपात् कारणात् निर्मितोऽसि परमेश्वरेण जनितोऽसि। स्वाहा सूक्तमस्तु॥1॥

1- मन्त्र॰ ब्रा॰ 1.1.2-4

हे वधु, इमं ते उपस्थं जननेन्द्रियं मधुना वीर्येण संसृजामि संसृष्टं करोमि, एतत् प्रजापतेः प्रजोत्पादकस्य परमेश्वरस्य द्वितीयं[2] मुखं प्रजोत्पत्तिसाधनं वर्त्तते। तेन उपस्थेन त्वं सर्वान् अवशान् वशेऽनागतानपि पुरुषान् अभिभवासि वशीकरोषि। यतो हे राज्ञि, त्वं वशिनी वशकर्त्री असि। स्वाहा सूक्तमिदमस्तु ॥ 2 ॥

गुहानाः तत्त्वदर्शिनः, पुराणाः प्राक्तनाः ऋषयः, स्त्रीणाम् उपस्थं जननेन्द्रियं क्रव्यादमग्निम् हविर्भक्षकमग्निमिव अकृण्वन् स्वीकुर्वन्ति। तेन सह च त्रैश्रृङ्गम् पुरुषशिश्नोत्पन्नं, त्वाष्ट्रम् उत्पादकं वीर्यम् आज्यम् घृतमिव अकृण्वन् मन्यन्ते। हे वधु, तत् आज्यं त्वयि दधातु धारयतु तव भावी पतिः। स्वाहा सूक्तं भवतु ॥ 3 ॥

**अभिप्रायः**— प्रथमो मन्त्रः शिक्षयति यत् कामः खलु यद्यपि मदकारी, स्त्रीसहवासेन शमनीयश्च वर्तते तथापि कामस्योद्देश्यं तपो गृहाश्रमधर्मपालनं च वर्तते न तु विषयवासनापङ्के निमज्जनम्। कामो हि तपसोऽधिजातः, अतो विवाहात् प्राक् सर्वप्रथमं स्नानविधिना इदं ज्ञाप्यते यत् गृहस्थाश्रमं गत्वा तपसि स्थेयम्। द्वितोयतृतीयमन्त्रयोरपि काममाहात्म्यं वर्णितम्। स्त्री अग्निरिव पुरुषश्च घृतमिव भवतीत्युक्तम्। तत्र संयमः स्वीकार्यः। मनुरप्याह—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥[3]

अतो वधूवरौ गृहस्थाश्रमेऽपि विजितेन्द्रियौ सन्तौ मर्यादया सन्तानोत्पत्तिं कुर्याताम्, नैव विषयासक्तौ निमज्जेताम्। युवावस्था खलु कामोष्णप्रचुरा। अतो यथा जलेनाग्निः प्रशाम्यते तथा कामाग्निं स्त्रीपुरुषौ यथोचितं प्रशमयेताम्। स्नानविधौ प्रयुज्यमानानामेषां मन्त्राणामयमेवाभिप्रायः। शुद्धशरीरेण, शुद्धमनसा हि शुद्धसंकल्पा धार्यन्ते शुभकर्माणि च विधीयन्त इति संस्कारात् प्राक् शरीरशुद्धिरनिवार्या। अतो विवाहसंस्कारात् प्राक् स्नानविधिर्वर्णितः।

**तुलना** — उपर्युक्तस्नानविधिर्महर्षिदयानन्दप्रणीतसंस्कारविधौ गृह्यसूत्रेषु वरवध्वोर्गृहे विधेया इतरविधयोऽपि प्राप्यन्ते। भारद्वाजाग्नि-

2- प्रजोत्पत्तेः प्रथमं मुखं साधनं प्रकृतिः, द्वितीयं चायमुपस्थो भवति।
3- मनु० 2.94

वेश्यगृह्यसूत्रयोः[4] कन्यादानस्य मौखिकस्वीकृतेरनन्तरं निम्नमन्त्रैस्तस्याः कन्यायाः जलाभिसेचनं प्रतिपादितम्—

हिरण्यगर्भाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
अग्निं या गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु ।।
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ।।
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शं स्योना भवन्तु ।।
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे ।
सर्वां अग्नींरप्सुषदो हुवे मयि वर्चो बलमोजो निधत्त ।।[5]

लौगाक्षिगृह्यसूत्रानुसारं[6] विवाहसंस्कारात् पूर्वं वधूः स्वगृहे निम्नमन्त्रोच्चारणपुरःसरं विभिन्नवाद्यानि वादयति—

शुनं वद दुन्दुभे सुप्रजास्त्वाय गोमुख प्रक्रीडयन्तु कन्याः ।
सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गलाः ।।

काठकगृह्यसूत्रे[7] विवाहदिनात् पूर्वरात्रौ कुमार्यो निम्नमन्त्रं पठन्ति—

क्रीडं वः शर्धो मारुतमनर्वाणं रथे शुभम् ।
कण्वा अभि प्रगायत । ऋ० 1.37.1

काठकगृह्यसूत्रे[8] विवाहार्थं वधूगृहं प्रति वरयात्रा विशदतया वर्णिता । प्रस्थानम् पूर्वं वरसम्बन्धिनः "पूषा मा प्रपथे पातु०" इत्यादि-मन्त्रमुच्चारयन्तो जलाशयं प्रति गच्छन्ति । जलाशयं प्राप्य ते "शन्नो देवीरभिष्टये" इतिमन्त्रेण स्वशिरसि जलमभिषिञ्चन्ति आचामन्ति च । तत्पश्चादभीष्टदिशं प्रति प्रस्थानकाले ते "प्राची दिगग्निः" इत्यादि-मन्त्राणामेकं दिशोऽनुसारं पठन्ति ।

एषां विधीनां वर्णनमनावश्यकत्वान्महर्षिप्रणीतसंस्कारविधौ न गृहीतम् ।

---

4- भा० गृ० 1.18; आग्नि० गृ० 1.6.1
5- तै० सं० 5.6.1.1-2; मै० सं० 2.13.1; तु०-ऋ० 7.49.3; अ० 1.33
6- लौ० गृ० 17.2
7- का० गृ० 22.1
8- का० गृ० 23.1-4

## 2- विवाहसंस्कारस्य प्राक्सज्जा

विवाहसंस्कारतः प्रागग्निहोत्रकर्म क्रियते। अग्निहोत्रसिद्धये याः सज्जाः क्रियन्ते ताः सर्वाः संस्कारविधेः सामान्यप्रकरणे लिखिताः। यज्ञदेशं यज्ञमण्डपं यज्ञकुण्डञ्चाधिकृत्य विस्तरेण तेषामाकारप्रकार-परिमाणानि संस्कारविधौ सप्रमाणं वर्णितानि। यज्ञसमिधां हविषाञ्च प्रकाराः, स्थालीपाकः तन्निर्माणविधिश्चापि प्रमाणपुरस्सरं तत्र प्रदर्शिताः। विवाहसंस्कारे प्रयुज्यमानानां साधनानां द्रव्याणाञ्चोल्लेखोऽत्र क्रियते—

यज्ञमण्डपः, यज्ञकुण्डम्, समिधः, घृतम्, यज्ञसामग्री, कस्तूरीकेसर-चन्दनादीनि, मधु, दधि, शमीपत्राणि, लाजाः, शूर्पम्, दण्डः, कलशः, शिला, स्थाली-दर्वि-गडुक-कंसादीनि पात्राणि, कुशासनानि, वरवधू-वस्त्राणि, दीपशलाका, कर्पूरम् मिष्टान्नं स्थालीपाकादीनि च, गौस्तन्मूल्यं वा, दक्षिणाद्रव्यम्।

इतोऽतिरिक्तं लोकव्यवहारमनुसृत्य वेदिसज्जायै गोधूमचूर्णहरिद्रा-दीनि विविधरंगाश्च; काष्ठपीठिका, सिन्दूरम्, पुष्पमालाः, किरीटम्, नारिकेलकदलीस्तम्भ-आम्रपत्रतोरणादीन्यपि संगृह्यन्ते।

एवं सर्वद्रव्याणि सज्जीकृत्य विवाहसंस्कारात् प्राक् ऋत्विग्वरण-मपि क्रियते। एकस्य द्वयोस्त्रयाणां चतुर्णां वा ऋत्विजां वरणं कुर्यात्। ऋत्विग्वरणविधिस्तु संस्कारविधेः सामान्यप्रकरणे प्रतिपादितः। यथा—

यजमानोक्तिः—ओमावसो सदने सीद।

ऋत्विगुक्तिः—ओं सीदामि।

यजमानोक्तिः—अहमद्य विवाहसंस्कारकर्मकरणाय भवन्तं वृणे।

ऋत्विगुक्तिः ·ओं वृतोऽस्मि।

विध्यनुसारञ्चर्त्विजं वृत्वा तमुपवेश्य स्वयमुपविश्य च यथोक्तं विदधीत।

## 3- कन्याद्वारा वरसत्कारः

यदा सुस्नातः सुवस्त्रालंकृतो विहितस्तुतिप्रार्थनोपासनो वरो वधूगृहं प्रविशति तदा द्वार्येव वधूः कार्यंकर्तारश्च मधुपर्कादिभिस्तं

सत्कुर्वन्ति। वरस्तावद वधूगृहं प्रविश्य पूर्वाभिमुखं तिष्ठति। वधूः कार्यकर्त्तारश्च वरसमीपे उत्तराभिमुखं तिष्ठन्ति।[9]

**विष्टरदानम्—**

वधूक्तिः—साधु भवानास्तामर्चयिष्यामो भवन्तम्।[10]

वरोक्तिः—ओम् अर्चय।

वधूक्तिः—ओं विष्टरो विष्टरो विष्टरः प्रतिगृह्यताम्।[11]

वरोक्तिः—ओं प्रतिगृह्णामि।[12] इत्युक्त्वा वरः आसनं गृहीत्वा तत् प्रसार्य तदुपरि पूर्वाभिमुखमुपविशति मन्त्रञ्च जपति—

ओं वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः।
इमं तमभितिष्ठामि यो मा कश्चाभिदासति॥[13]

**मन्त्रार्थः**—उद्यताम् उद्गच्छतां नक्षत्रादिज्योतिषां मध्ये सूर्य इव सूर्यो यथा श्रेष्ठस्तथा समानानाम् समकक्षाणां मध्ये अहं वर्ष्मोऽस्मि श्रेष्ठोऽस्मि। यः कः च माम् अभिदासति न्यक्कर्त्तुमिच्छति तम् इमम् अभितिष्ठामि अभिभवामि।

**अभिप्रायः**—कन्याद्वारा विष्टरप्रदानं सूचयति यद् यथात्र विवाह-संस्कारारम्भे सा विष्टरप्रदानेन वरं सत्करोति तथैव विवाहानन्तरं सर्वदा सा पतिं सत्करिष्यति। किं च पठ्यमानमन्त्रेणैतदपि स्पष्टं यदासनमधिरोहन् वरो भावनामिमां स्वहृदये बध्नाति यथाहमासन-मधिष्ठामि तथैव यः कोऽपि शत्रुर्गृहस्थाश्रमे मां मद्वधूं वा समुद्वेजयितु-मायास्यति तमप्यहम् अधिस्थास्यामीति। वरस्य पूर्वाभिमुखत्वं वराय उपदिशति यत् पूर्वदिगवलम्बिभास्करवत् त्वया गृहस्थाश्रमः स्वभासा सदा भासनीयः। वध्वाः कार्यकर्तॄणाञ्चोत्तराभिमुखत्वं सत्कारविधि-सौविध्यार्थं, किंच तेनोत्कर्षोऽपि सूच्यते।

---

9- यदि गृहप्रवेशद्वारं पूर्वाभिमुखं भवेदत्ता वरः उत्तराभिमुखं वधूः कार्यकर्तारश्च पूर्वाभिमुखमुपतिष्ठन्ति, इति दयानन्दीया टिप्पणी।

10- पा० गृ० 1.3.4, आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्त-मिति।

11- तु०—पा० गृ० 1.3.6, अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि।

12- तु०—पा० गृ० 1.3.7, विष्टरं प्रतिगृह्णाति।

13- पा० गृ० 1.3.8; तु०—आश्व० गृ० 1.24.8; मा० गृ० 1.9.8; वा० गृ० 1.27

**पाद्यदानम्—**

वरद्वाराऽऽसनग्रहणानन्तरं कन्या जलपूर्णपात्रं वराय समर्पयति। वधूक्तिः—ओं पाद्यं पाद्यं पाद्यं प्रतिगृह्यताम्।[14]

वरोक्तिः—ओं प्रतिगृह्णामि। इत्युच्चार्य स जलं गृहीत्वा पादौ प्रक्षालयति[15], मन्त्रञ्च पठति—

ओं विराजो दोहोऽसि विराजो दोहमशीय
मयि पाद्यायै विराजो दोहः।[16]

**मन्त्रार्थः**—हे जल, त्वं विराजः विशेषेण राजमानस्य सूर्यस्य दोहः दुग्धभूतः सूर्यद्वारा मेघादभिवर्षितो रस इत्यर्थः असि भवसि। अहं तादृशं विराजो दोहम् त्वाम् अशीय सेवेय। विराजो दोहः पवित्रतमो रसस्त्वं पाद्यायै पादाय हिता क्रिया पाद्या तस्यै पादप्रक्षालनायेति यावत् मयि मां समुपस्थितोऽसि।

**अभिप्रायः**—यथाऽस्मिन् काले वधूः पादप्रक्षालनार्थं वराय पाद्यं प्रयच्छति तथैवाग्रेऽपि विवाहानन्तरं यदा पतिः श्रान्तो गृहं समागमिष्यति तदा सा पाद्यप्रदानेन तस्य श्रान्तिमपनेष्यतीति द्योत्यते। उच्चार्यमाणे मन्त्रे जलं विराजो दोह इत्युक्तम्। जलं हि दीप्तिमतः सूर्यस्यापत्यम्, अत एव जलेऽग्निर्निवसति, यथोक्तं "पयस्वानग्न आगहि तं मा संसृज वर्चसा, ऋग्० 10.9.9, इति। यथा जलं विराजो दोहोऽस्ति तथैवाहमपि जलस्योपयोगेन विराजो दोहं दीप्तिरसम् अशीय प्राप्नुयामित्यपि सूच्यते।

**अर्घदानम्—**

कन्योक्तिः—ओम् अर्घोऽर्घोऽर्घः प्रतिगृह्यताम्।

वरोक्तिः—ओम् प्रतिगृह्णामि।[17] इत्युच्चार्य वरः कन्याहस्ताज्जलपात्रं

---

14- द्र०-पा० गृ० 1.3.5-6

15- ब्राह्मणवर्णश्चेत् प्राग्दक्षिणपादं पश्चात् सव्यपादं, क्षत्रियादिवर्णश्चेत् प्रथमं सव्यपादं पश्चाद्दक्षिणपादं प्रक्षालयेत्, इति दयानन्दीया टिप्पणी। तुलनीयम्— "ब्राह्मणश्चेद् दक्षिणं प्रथमम्। "पा० गृ० 1.3.11, ब्राह्मणो हि समाजस्य दक्षिणः पादः, इतरे वर्णाः वामपादभूताः। अत एवायं विधिभेदः।

16- पा० गृ० 1.3.12; बौ० गृ० 1.2.28

17- द्र०-पा० गृ० 1.3.5, 7, 13

गृहीत्वा तेन जलेन मुखं प्रक्षालयति। प्रक्षाल्य च तदानीमिमौ मन्त्रौ पठति—

ओं आप स्थ युष्माभिः सर्वान् कामानवाप्नवानि ॥ 1 ॥
ओं समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत।
अरिष्टा अस्माकं वीरा मा परासेचि मत्पयः ॥ 2 ॥[18]

मन्त्रार्थः—हे जलानि, यूयम् आपः आप्यते प्राप्यते नैरोग्यं यैस्तथाविधाः नैरोग्यलाभहेतवः स्थ। युष्माभिः अहं सर्वान् कामान् मनोरथान् अवाप्नवानि प्राप्नुयाम्। वः युष्मान् अहं समुद्रम् अन्तरिक्ष-लोकं प्रहिणोमि प्रेषयामि गमयामि। स्वां योनिं स्वकारणभूतं मेघम् अभिगच्छत अभिव्रजत। अस्माकं वीराः अरिष्टाः रोगरहिताः अनुपहताः सन्तु, रुष रिष हिंसायाम्। मत् ममान्तिकात् पयः जलं मा परासेचि अपगतं मा भवतु।

अभिप्रायः—मुखप्रक्षालनानन्तरं प्रस्तुतमन्त्रपाठस्यायमेवाभिप्रायो यज्जलं हि रोगान् नाशयति, जलेनैव जीवनं ध्रियत इति गृहस्थजीवने शुद्धजलं सुलभं भवेत्। जलं हि स्वयोनिं समुद्रं पर्जन्यं वा गच्छेत्, ततश्चाभिवृष्य पुनरस्मान् प्राप्नुयात्। एवं चक्रमिदं सर्वदैव प्रवर्तेत, येन जलाभावेन वीरा अस्माकं कष्टापन्ना न भवेयुः।

आचमनीयदानम्—

अर्घविधेरनन्तरं वेदिपश्चिमभागप्रसारितासने वरः पूर्वाभिमुख-मुपविशति। कार्यकर्त्ता जलमाचमनोऽन्योपपात्रे निधायोपपात्रं कन्याहस्ते ददाति।

कन्योक्तिः— "ओम् आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यताम्।"[19]

वरोक्तिः—"ओं प्रतिगृह्णामि"। इत्युच्चार्य जलपात्रं गृहीत्वा सम्मुखे संस्थाप्य तस्माज्जलं दक्षिणे हस्तेऽङ्गुलिमूलपूर्णमादाय निम्नमन्त्रं क्रमशस्त्रिवारं पठति त्रिश्चाचामति—

ओं आ मागन् यशसा संसृज वर्चसा।
तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥[20]

---

18- द्र०—पा० गृ० 1.3.13-14
19- पा० गृ० 1.3.5-7
20- पा० गृ० 1.3.15

**मन्त्रार्थः**—हे जल, मां आगन् त्वं मां प्राप्तोऽसि। त्वं मां यशसा कीर्त्या वचसा तेजसा च संसृज संयोजय। तं मां प्राजानां सन्तानानां प्रियं पशूनाम् गवादीनाम् अधिपतिं स्वामिनं तथा तनूनां शरीराणाम् अरिष्टिं न विद्यते रिष्टिः रोगादिजन्या क्षतिर्यस्य तादृशं कुरु सम्पादय।

**अभिप्रायः**—अत्र आचमनविधिं कुर्वन् जलाद् यशो वर्चश्च प्रार्थयते। जलं हि जनानां जीवनाधारत्वाद् यशोयुक्तं, तादृशमेव यशो ममापि भवेत्, अहमपि स्वपरिवारस्य जीवनाधारो भवेयम्। जलस्य सम्यक् प्रयोगेण शारीरिकम् आत्मिकं च वर्चः, रोगमुक्तिः, आरोग्यं चापि प्राप्यते। जलं यथा प्रजानां प्रियं पशूनाञ्चाधिपतिस्तथैवाहमपि भवेयमिति दिक्।

**मधुपर्कविधिः**—

(क) आचमनाद्यनन्तरं कार्यकर्त्ता मधुपर्कपात्रं कन्याहस्ते प्रयच्छति। "दधि घृतसंयुक्तं मधुसंयुक्तं वा मधुपर्कः। त्रिगुणं दधि, एकगुणं सर्पिर्मधु वेति। अयं च मधुपर्कः कांस्यपात्रे ग्राह्यः" इति दयानन्दः।[21]

कन्योक्तिः—"ओं मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यताम्।"[22]

वरोक्तिः—"ओं प्रतिगृह्णामि"। इत्युक्त्वा मधुपर्कपात्रमादाय "ओं मित्रस्य त्वा चक्षुषा समीक्षे"[23] इति मन्त्रवाक्यमुच्चार्य मधुपर्कं चक्षुषा पश्यति।

**अभिप्रायः**—मित्रदृष्ट्या मधुपर्कसंप्रेक्षणं यद् भोजनं पुरतः समागच्छेत् तन्मित्रस्य चक्षुषा पश्येदिति द्योतयति। अत एवोक्तम् अथर्ववेदे—"स य ओदनस्य महिमानं विद्यात्। नाल्प इति ब्रूयान्नानुपसेचन इति

21- दधि मधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम्। अभाव उदकम्, आप० ध० 2.4.8-9; 13.10-12, इत्यापस्तम्बः। दधनि मध्वानीय। सर्पिर्वा मध्वलाभे, आश्व० गृ० 1.24.5-6, इत्याश्वलायनः।

22- द्र०-पा० गृ० 1.3.5-7; मधुपर्कस्य विस्तृतविधिर्द्रष्टव्यः—आ० गृ० 13.19-20; खा० गृ० 4.4.26; गौ० ध० 4.10.23-24; 5.25; आप० ध० 2.3.8 5-6; बौ० ध० 2.3.63-64; मनु० 3.119

23- द्र०-पा० गृ० 1.3.16; आश्व० गृ० 1.24.13

नेदं च किं चेति ॥" अ० 11.3.23-24। मधुपर्कः खलु दधिमधुनोर्दधिसर्पिषोर्वा योगो भवति। दधि मधु सर्पिश्च त्रयमपि सात्त्विकं स्वास्थ्यवर्धकं च। एवंविधानां स्वास्थ्यकराणां द्रव्याणां भोजनं हितकरमिति द्योत्यते।

(ख) ईक्षणानन्तरं निम्नमन्त्रं जपन् वरो मधुपर्कपात्रं सव्यहस्ते गृह्णाति। ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥"[24]

अहं सवितुः सर्वोत्पादकस्य सर्वेषां मनसि शुभभावनानां प्रेरकस्य च परमेश्वरस्य प्रसवेऽनुशासने प्रेरणायां वा तिष्ठन् अश्विनोः द्यावापृथिव्योः बाहुभ्यां द्यावापृथिवीवद् विशालाभ्यां भुजाभ्यामित्यर्थः, पूष्णः पोषकस्य सूर्यस्य हस्ताभ्यां सूर्यकिरणसदृशसमुज्ज्वलपाणिभ्यामित्यर्थः त्वां प्रतिगृह्णामि। अहं स्वार्थाय त्वां नाददे किं तु देवप्रेरणया परार्थमभिलक्ष्य त्वां स्वीकरोमीत्याशयः।

(ग) पुनः निम्नमन्त्रान् पठन् वरो मधुपर्कमवलोकयति।

ओं भूर्भुवः स्वः। मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः ॥ 1 ॥
ओं भूर्भुवः स्वः। मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः।
मधु द्यौरस्तु नः पिता ॥ 2 ॥
ओं भूर्भुवः स्वः। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः ॥ 3 ॥[25]

ऋतायते सत्याचरणयुक्ताय वायवः, नद्यः, ओषधयः, रात्रिः, उषसः, पार्थिवलोकः, द्युलोकः, वनस्पतिः, सूर्यः, गवादयश्च सर्वे पदार्था ईश्वरकृपया मधुराः सन्त्विति मधुपर्कं गृह्णन् प्रार्थयते। एतेन गृहस्थाश्रमे भोज्यमानस्य भोजनस्य स्वादे परिणामे च माधुर्यं स्यादिति सूच्यते।

(घ) तदनन्तरं मधुपर्कं वरो दक्षिणहस्तस्यानामिकयाऽङ्गुष्ठेन च त्रिधा विलोडयति। आलोडयंश्चेमं मन्त्रं पठति—

---

24- यजु० 1.10; पा० गृ० 1.3.17; आश्व० गृ० 1.20.14; जै० गृ० 18.19; हि० गृ० 1.13.8; वै० गृ० 2.16

25- यजु० 13.27-29; ऋ० 1.90.6-8; तै० सं० 4.2.9.3; मै० सं० 2.7.16; का० सं० 39.3; आश्व० गृ० 1.24.14

"ओं नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्क्रन्तामि ॥"[26]

श्यावास्याय कपिशमुखाय तादृशस्वरूपाय जाठराग्नये नमः, नम इत्यन्ननाम, निघं० 2.7, अन्नं मधुपर्कादिकं दीयते। हे जाठराग्ने ! ते तव अन्नशने अन्नवद्भोज्ये मधुपर्के यद् अभक्ष्यं तृणादिकम् आविद्धं संमिलितं वर्त्तते तत् ते निष्क्रन्तामि निरस्यामि। आलोडनेन शुद्धच-शुद्धिपरीक्षां करोमि, अशुद्धं चेच्छुन्धामीत्याशयः।

(ङ) मधुपर्कंविलोडनानन्तरं वरो निम्नमन्त्रैर्दिक्षु ततः किञ्चि-दुत्क्षिपति।

"ओं वसवस्त्वा गायत्रेण छन्दसा भक्षयन्तु"। इति पूर्वदिशि
"ओं रुद्रास्त्वा त्रैष्टुभेदन छन्दसा भक्षयन्तु"। इति दक्षिणदिशि
"ओम् आदित्यास्त्वा जागतेन छन्दसा भक्षयन्तु"। इति पश्चिमदिशि
ओं विश्वे त्वा देवा आनुष्टुभेन छन्दसा भक्षयन्तु"। इत्युत्तरदिशि
"ओं भूतेभ्यस्त्वा परिगृह्णामि"। इति पात्रमध्यादुद्गृह्य ऊर्ध्वं त्रिरुत्क्षिपति।[27]

**अभिप्रायः**—विधिरयं द्योतयति यद् गृहस्थः समर्जितसम्पत्तेः प्राप्ताद् भोजनाद् वा स्वोपयोगात् पूर्वमन्येभ्यो भागं निष्कासयेत्। अत एव गृहस्थस्य कृते देवयज्ञो बलिवैश्वदेवयज्ञः, पितृयज्ञोऽतिथियज्ञश्च नित्यकर्त्तव्यत्वेन विहितः।

(च) मधुपर्कस्य दिक्षूत्क्षेपणानन्तरं वरः मधुपर्कं त्रिषु कांस्य-पात्रेषु विभज्य त्रीण्यपि पात्राणि भूमौ स्थापति। निम्नमन्त्रेण च स मधुपर्कं भुङ्क्ते।

ओं यन्मधुनो मधव्यं परमं रूपमन्नाद्यम्। तेनाहं मधुनो
मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥[28]

**मन्त्रार्थः**—मधुनः मधुमिश्रितस्य मधुपर्कस्य यत् मधव्यं मधुने मधुरजीवनाय हितं अन्नाद्यम् अन्नवत् सेवनीयं परमम् उत्कृष्टं रूपं स्वरूपमस्ति मधुनः मधुपर्कस्य तेन मधव्येन अन्नाद्येन परमेण रूपेण

26- पा० गृ० 1.3.18
27- आश्व० गृ० 1.24.14-15
28- पा० गृ० 1.3.20; द्र०-बौ० गृ० 1.2.37; आप० गृ० 5.13.13; वै० गृ० 2.16; का० गृ० 24.13

अहं परमः श्रेष्ठः मधव्यो मधुनि मधुरव्यवहारे साधुः अन्नादः अन्नादिभोज्यभक्षणसमर्थश्च असानि भवेयम् ।

मन्त्रमिमं क्रमशस्त्रिवारमुच्चार्य प्रतिपात्रं वरः किञ्चित् प्राश्नाति, अशेषं वा भुङ्क्ते । शिष्टं चेत् सेवकाय प्रयच्छति जले वा प्रक्षिपति ।[29]

अभिप्रायः—मधुपर्कस्य त्रिपात्रेषु स्थापनं गृहस्थाश्रमे भोज्यद्रव्याणां बाहुल्यं विविधत्वं च सूचयति । अत एवायं लोकाचारो यत् स्थाल्यां नैकः कंसो निधीयते, किन्तु बहुषु बहुविधानि व्यञ्जनानि परिवेश्यन्ते । परिशिष्टस्य सेवकाय दानं तस्यैव योग्यत्वात् । जले प्रक्षेपणं तु प्रतीकम्, उच्छिष्टस्य सरोवरादिषु प्रक्षेपणेन तत्रत्यानां मत्स्यादिजलजन्तूनां भोज्यं भवति ।

तुलना—विष्टरदाने-काठकगृह्यसूत्रे[30] आसनप्रसारणसमये निम्नमन्त्रो विनियुक्तः—"विष्टरोऽसि मातरि सीद ।" तत्रासनोपवेशनमन्त्रो नास्ति । गोभिलगृह्यसूत्रं खादिरगृह्यसूत्रञ्चासनप्रसारणाय निम्नमन्त्रं विनियोजयतः[31]—"या ओषधीः सोमराज्ञीर्वह्वीः शतविचक्षणाः । ता मह्यमस्मिन्नासनेऽच्छिद्राः शर्म यच्छत ॥" अत्रासनोपवेशनकालेऽपि भिन्नमन्त्रः प्रतिपादितः[32]—"या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु । ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म यच्छत ॥"

पाद्यदाने—गोभिलखादिरगृह्यसूत्रयोर्निम्नमन्त्रत्रयं विनियुक्तम्[33], प्रथममन्त्रेण वामपादस्य, द्वितीयेन दक्षिणस्य, तृतीयेन चोभयोः पादयोः प्रक्षालनं प्रतिपादितम्—सव्यं पादमवनेनिजेऽस्मिन् राष्ट्रे श्रियं दधे ॥ दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्रे श्रियमावेशयामि ॥ पूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे । राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै ॥[34]

---

29- द्रा०-पा० गृ० 1.3.22-23; आश्व० गृ० 1.24.17-20

30- का० गृ० 24.7

31- क्र०—4.19.6; 4.4.9

32- क्र०—4.10.7; 4.4.10

33- क्र०—4.10.10, 11; 4.4.11, 12, 14

34- एते मन्त्राः ऐतरेयब्राह्मणे, 8.27.8, विद्यन्ते । तत्र राज्ञा पुरोहितपादप्रक्षालनसमये एते विनियुक्ताः ।

अर्घदाने-अर्घ्यजलग्रहणकाले काठकगृह्यसूत्रे आपोहिष्ठीयमन्त्राणां, ऋ० 10.9.1-3, पारस्करगृह्यसूत्रे "आपः स्थः युष्माभिः सर्वान् कामानवाप्नवानि" इत्यस्य, आपस्तम्बहिरण्यकेशिगृह्यसूत्रयोश्च "आ मा गन्यशसा संसृज तेजसा वर्चसा पयसा च। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनाम्" इत्यस्य विनियोगो विहितः।[35] बौधायनपारस्करापस्तम्बहिरण्यकेशिभारद्वाजगृह्यसूत्रेषु[36] निम्नमन्त्रस्य विनियोगोऽर्घ्यजलप्रवाहणसमये कृतः—"समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः॥"

मधुपर्कप्रकरणे-काठकगृह्यसूत्रानुसारं[37] "तच्चक्षुः०" इति मन्त्रेण मधुपर्केक्षणं क्रियते। पारस्करगृह्यसूत्रे "मधु वाता ऋतायते" इत्याद्या मन्त्रा मधुपर्कप्राशनविधौ विनियुक्ताः। कौशिकः एभिर्मन्त्रैर्मधुपर्कस्याभिमन्त्रणं प्रतिपादयति। मानवकाठकवाराहगृह्यसूत्राणामनुसारमनामिकयाङ्गुल्या एभिर्मन्त्रैस्त्रिवारं मधुपर्कं आलोड्यते।[38] मधुपर्कोत्क्षेपणमन्त्राणां पाठः काठकगृह्यसूत्रे[39] एवं लभ्यते—"वसवस्त्वाऽग्निराजानो भक्षयन्तु॥ पितरस्त्वा यमराजानो भक्षयन्तु॥ रुद्रास्त्वा सोमराजानो भक्षयन्तु॥ आदित्यास्त्वा वरुणराजानो भक्षयन्तु॥ विश्वे त्वा देवा बृहस्पतिराजानो भक्षयन्तु"॥ गोभिलगृह्यसूत्रे खादिरगृह्यसूत्रे च मधुपर्कप्राशनविधौ "यशसो भक्षोऽसि महसो भक्षोऽसि। श्रीभक्षोऽसि श्रियं मयि धेहि स्वाहा॥" इत्यस्य, जैमिनीयगृह्यसूत्रे "त्वा यशसे श्रियेऽन्नाद्याय ब्रह्मवर्चसाय" इत्यस्य, भारद्वाजगृह्यसूत्रे 'त्र्य्यै विद्यायै०" इति मन्त्रस्य, आश्वलायनगृह्यसूत्रे च "विराजो दोहोऽसि। विराजो दोहमशीय। मयि दोहः पद्यायै विराज" इत्यस्य विनियोगो विहितः।[40]

## 4- आचमनं गोदानं च

कन्याद्वारा वरसत्कारानन्तरं वरो निम्नमन्त्राभ्यां द्विराचामति।

35- क्र०—24.11; 1.3.13; 5.13.8; 1.13.3

36- क्र०—1.2.29; 1.3.14; 5.13.12; 1.13.4; 2.24

37- का० गृ० 24.11

38- क्र०—1.3.21; 91.1; 1.9.14; 24.11; 11.16

39- का० गृ० 24.12

40- क्र०—4.10.15; 4.4.18; 19.1; 2.24; 1.24.16

ओम् अमृतापिधानमसि स्वाहा ॥

ओं सत्यं यशः श्रीर्मयि श्रीः श्रयतां स्वाहा ॥[41]

आचमनमेतन्मधुपर्कभोजनान्ते मुखकण्ठादिशुद्ध्यर्थम्। यथा हि तैत्तिरीयारण्यकानुसारं, 10.35, भोजनादूर्ध्वं जलाचमने "अमृतापिधानमसि" इति मन्त्रस्य विनियोगो दृश्यते। तत्पश्चाद् "ओं वाङ्म आस्येऽस्तु" इत्यादिमन्त्रैर्मुखादीन्यङ्गानि जलेन स्पृशति। अङ्गस्पर्शोऽयं मुखनासिकानेत्रादिपावनार्थम्।

ततः कन्या—ओं गौर्गौर्गौः प्रतिगृह्यताम्। इति वाक्येन वरं सम्बोध्य तस्मै यथायोग्यं गवादिद्रव्य प्रयच्छति। वरश्च--"ओं प्रतिगृह्णामि" इत्युच्चार्य तद् द्रव्यमादत्ते।

अभिप्रायः—कन्यापक्षेण वराय गौर्दीयते तत् क्रीणनाय धनं वा। गृहिभ्यो गावः कियल्लाभकारिण्यः सन्तीति प्रत्यक्षम्। ऋते गां गृहस्थाश्रमस्य कल्पनाऽपि दुष्करा। वेदेष्वपि "गावः सन्तु प्रजाः सन्तु अथो अस्तु तनूबलम्", अ० 9.4.20, "गावो अस्मान् मातरः सूदयन्तु", अ० 6.51.2 'सं सिञ्चामि गवां क्षीरम्", अ० 2.26.4, "यूयं गावो मेदयथा कृशं चिद्", ऋ० 4.21.5, "गावो घृतस्य मातरः", अ. 6.9.3, "वीतं पातं पयस उस्रियायाः", अ० 7.73.5, इत्यादिमन्त्रैर्गोमहिमा गीयते। कन्यापिता कन्याद्वारा वरवध्वोः स्वास्थ्यमभिलक्ष्य विवाहकाले वराय गां ददाति। गव्यपयोदधिघृततक्रादिसेवनेन सर्वदा वधूवरौ परिवारजनाश्च हृष्टपुष्टा भवेयुरित्येषा पवित्रभावना गोदानविधौ सन्निहिता। गोदानविषये स्मृतावुक्तम्--गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी।[42]

## 5- कन्यादानम्

वधूद्वारा वरसंस्कारानन्तरं कन्यादानविधिः क्रियते। कार्यकर्त्ता सभामण्डपस्थानाद् वरं गृहमानीय तं पूर्वाभिमुखमुपवेशयति, कन्याञ्च पश्चिमाभिमुखम्। स्वयञ्च कार्यकर्त्ता उत्तराभिमुखमुपविशति।

ततः "ओं अमुकगोत्रोत्पन्नाम् इमाम् अमुकनाम्नीम् अलङ्कृतां कन्यां प्रतिगृह्णातु भवान्।" इत्युक्त्वा कार्यकर्त्ता वरस्य दक्षिणे उत्तानहस्ते वध्वा दक्षिणमुत्तानहस्तं स्थापयति। वरश्च "ओं प्रतिगृह्णामि" इत्यभिधाय वध्वा हस्तं प्रतिगृह्णाति।

41- आश्व० गृ० 1.24.21-22

42- शा० स्मृ० 1.14

महर्षिणा "कार्यकर्त्ता" इत्येव लिखितम्। मातापित्रोरेव कन्या भवति तस्मात् तावेव कन्यादानाधिकारिणौ। तयोरभावे पितृव्यभ्रात्रादिका येषां संरक्षणे सा तिष्ठति तेऽधिकारिणो भवन्ति। लोकाचारोऽप्ययमेव। पारस्करगृह्यसूत्रं पित्रा कन्यादानं प्रतिपादयति—'पित्रा प्रत्तामादायेति"। वारागृह्यसूत्रं—"पिता भ्राता वा दद्याद्" इति प्राह। याज्ञवल्क्यस्तु पिता, पितामहः, भ्राता, सजातिजनः, माता च कन्यादानस्य क्रमशोऽधिकारिणः इति वर्णयति। यथोक्तं तेन—पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ नारदः—मित्रं राज्यमपि च कन्यादानस्याधिकारी भवतीति मनुते।[43]

अभिप्रायः—कन्याप्रतिग्रहणकाले वरः पूर्वाभिमुखमुपविशन् पूर्वदिगवलम्बिसूर्यं पूर्वसन्ध्यां च स्मरति। कन्यापि पश्चिमाभिमुखमुपविष्टा सती पश्चिमदिगवलम्बिसूर्यं पश्चिमसन्ध्यां च ध्यायति। एतेन सूर्यसन्ध्यावद् अनयोः साहचर्यं सुदृढं भवेदिति द्योत्यते। वरस्योत्तानहस्ते कन्याया उत्तानहस्तस्थापनेन वधूरियमुत्तानहस्ता त्वामभ्येति, तस्या हस्ते समुपार्जितं द्रव्यं देयं, येन सा गृहकार्यं संचालयिष्यतीति सूच्यते। किं चोत्तानत्वमूर्ध्वंगामिताया जागरूकतायाश्चापि प्रतीकम्। अपि च वध्वा उत्तानहस्तमेतदपि सूचयति यद् यथा त्वं मां प्रतिगृह्णासि तथैवाहमपि त्वां प्रतिगृह्णामीति।

तुलना—ऋग्वेदेऽथर्ववेदे चापि कन्यादानचर्चा श्रूयते।[44] वाराहगृह्यसूत्रकारमते—कन्यादानकाले चत्वार्यासनानि उपकल्प्य तेषु पुरस्तात् प्रत्यङ्मुखो दाता, पश्चात् प्राङ्मुखः प्रतिग्रहीता, दातुरुत्तरतः प्रत्यङ्मुखी कन्या, दक्षिणत उदङ्मुखो मन्त्रकारः उपविशेयुः।[45] तेषां मध्ये मूलसहितान् दर्भान् आस्तीर्य कांस्यपात्रमक्षतोदकेन पूरयित्वा सधवा स्त्री पात्रमस्मै प्रयच्छेत्। दाता प्रतिग्रहीता च "ददामि" "प्रतिगृह्णामि" इति त्रिर्ब्रूयाताम्। दाता च पिता भ्राता वा भवति। सावित्रेण मन्त्रेण कन्यां प्रतिगृह्य प्रजापतय इति च "क इदं कस्मा

43- पा० गृ० 1.4.16; वा० गृ० 13 7; याज्ञ० स्मृ० 1.63; वी० मि०, भा० 2, 822 पृष्ठे उद्धृतम्

44- ऋ० 10.85.39-41; अ० 14.2 2-4

45- तु०-मा० गृ० 8.2

अदादिति" सर्वत्रानुषज्यात् "कामैतत्ते" इत्यन्तम्। कन्यादाता च "समाना वः आकूतानीति" सह जपेत्।[46]

काठकमानववैखानसगृह्यसूत्रेषु कन्यादानविधिर्विस्तरेण प्राप्यते।[47] तत्र ब्राह्मदेयायाः कन्याया दानप्रसङ्गे यदा उभयपक्षीयाः सम्बन्धिनो मिलन्ति तदा कन्याजनको वरपितरं "ददामि" इति त्रिधा ब्रूते। वरपिता चोत्तरति—"प्रतिगृह्णामि" इति। पुरोहितश्च "एदद्वः सत्यम्" इत्यादिभिः शब्दैराशीर्वचांस्युक्त्वा दातारं प्रतिग्रहीतारञ्च पश्यन् इमौ मन्त्रौ पठति—"समाना वः आकूतानि समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति॥ सं वो मनांसि सं व्रता समु चित्तान्यकरम्। अमी ये विव्रताः स्थन तान्नः सन्नमयामसि॥ शुल्कदेयायाः कन्याया दानप्रसङ्गे तु प्रथमं शुल्कं निश्चीयते। धनदाता वरपिता "प्रजाभ्यस्त्वा" इत्यभिधाय धनं कन्यापित्रे ददाति। कन्यापिता च "रायस्पोषाय त्वा" इति निगद्य प्रतिगृह्णाति। धनञ्च जलपूरितकांस्यपात्रे निधाय कन्यासम्बन्धिनो मन्त्रोच्चारणपुरःसरं तज्जलं स्पृशन्ति।

वैखानसगृह्यसूत्रानुसारं[48] कन्यादाता निम्नमन्त्रमुच्चारयन् वरस्याञ्जलौ जलं प्रसिच्य कन्यां ददाति—"धर्मप्रजासम्पत्त्यर्थं यज्ञापत्त्यर्थं ब्रह्मदेवर्षिपितृप्त्यर्थं प्रजासहत्वकर्मभ्यो ददामि इति। मानवगृह्यसूत्रे कौशिकसूत्रे च[49] वरद्वारा कन्याग्रहणसमये निम्नमन्त्रो विनियुक्तः—"क इदं कस्मा अदात् कामः कामायादात्। कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविवेश। कामेन त्वा प्रतिगृह्णामि कामैतत्ते॥ अ० 3.29.7, इति।

## 6- वस्त्राणां प्रदानं धारणञ्च

ततो वरः कन्यायै वस्त्रयुग्मं परिधानार्थं प्रयच्छति वस्त्रद्वयं च स्वयं परिधत्ते। वरो निम्नमन्त्रं पठन् वध्वै उत्तमं वस्त्रं प्रयच्छति।

ओं जरां गच्छ परिधत्स्व वासो भवा कृष्टीनामभिशस्तिपावा।
शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं
परिधत्स्व वासः॥[50]

---

46- वा० गृ० 1.13
47- क०—15.16; 1.8.1-11; 10.16
48- वै० गृ० 3.2
49- मा० गृ० 1.8.9; कौ० सू० 45.17
50- पा० गृ० 1.4.12; द्र०-भा० गृ० 1.13; आग्नि० गृ० 1.61

**मन्त्रार्थः**—हे कन्ये, त्वं जरां वृद्धत्वं मया सह गच्छ प्राप्नुहि। वासः वस्त्रमिदं परिधत्स्व परिधेहि। कृष्टीनां पारिवारिकजनानाम्, "कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वेति निरुक्तम्", 10.22, अभिशस्तिपावा अभिशस्तिर्निन्दा तस्याः पातीत्यभिशस्तिपावा तादृशी भव। सुवर्चाः तेजस्विनी त्वं शतं शरदः शरदृतूनां शतानि शतवर्षाणीत्यर्थः जीव प्राणिहि। रयिं धनं पुत्रांश्च अनुसंव्ययस्व धारय प्राप्नुहीत्यर्थः, व्येञ् संवरणे। हे आयुष्मति ! इदं वासः परिधत्स्व परिधेहि।

ततो द्वितीयं मन्त्रमुच्चारयन् वरः उपवस्त्रं ददाति। कन्या च तदुपवस्त्रं यज्ञोपवीतवद् धारयति।

ओं या अकृन्तन्नवयन् या अतन्वत याश्च देवीस्तन्तूनभितो ततन्थ।
तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः ॥[51]

**मन्त्रार्थः**—या देवीः देव्यः इदं वासः वस्त्रम् अकृन्तन् कर्तितवत्यः, याश्च अवयन् ओतवत्यः। या तन्तून् सूत्राणि अतन्वत विस्तारितवत्यः। याश्च अभितः उभयपार्श्वयोरपि तन्तून् ततन्थ तेनुः, तुरीवेमादिव्यापारेण ग्रथितवत्यः, ताः देव्यः त्वा त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय इदं वासः प्रयच्छन्त्विति शेषः। त्वं च तत् परि संव्ययस्व प्राप्नुहि। हे आयुष्मति ! त्वमिदं वस्त्रं परिधत्स्व उत्तरीयत्वेन परिधेहि।

एवं वधूवस्त्रधारणानन्तरं स्वयं वरो निम्नमन्त्राभ्यां क्रमेणाधोवस्त्रमुपवस्त्रञ्च धारयति—

ओं परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि।
शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ 1 ॥

---

51- पा० गृ० 1.4.13, अस्य मूलम् अथर्ववेदे प्राप्यते "या अकृन्तन्नवयन् याश्च तत्निरे या देवीरन्तॉं अभितोऽददन्त। तास्त्वा जरसे सं व्ययन्त्वायुष्मीदं परि धत्स्व वासः ॥" अ० 14.1.45। अयं मन्त्रः, भा० गृ० 1.13; का० गृ० 25.4; पा० गृ० 1.4.13; मा० गृ० 1.10.8; आग्नि० गृ० 1.6.1; गो० गृ० 2.1.17; जै० गृ० 20.2 सूत्रे च वस्त्रदानसमये पठितः। गृह्यसूत्रेषु पाठभेदोऽपि वर्त्तते।

ओं यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ।
यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् ।। 2 ।।[52]

**मन्त्रार्थः**—परिधास्यै वस्त्रपरिधानाय यशोधास्यै यशःप्राप्तये दीर्घायुत्वाय दीर्घजीवनाय जरदष्टिः अस्मि वृद्धावस्थापर्यन्तं जिजीविषामि । शतं शरदः शतवर्षाणि पुरूची: शतादप्यधिकानि च जीवामि प्राणान् धारयामि । रायः धनस्य पोषं पुष्टिं च अभिसंव्ययिष्ये धारयिष्यामि । द्यावापृथिवी द्युलोकः पृथिवीलोकश्च मा मां यशसा कीर्त्या सह प्रतिपद्येताम् । इन्द्राबृहस्पती इन्द्रः ऐश्वर्यशाली राजा, बृहस्पतिः ज्ञानवान् आचार्यश्च यशसा सह मां ममान्तिकमागच्छेताम् । यशः कीर्तिं भगः ऐश्वर्यं च मा मां विदत् प्राप्नुयात्, यशः मा मां प्रतिपद्यतां सर्वतः प्राप्नोतु ।

**अभिप्रायः**—वस्त्रप्रदानविधिरयं सूचयति यद् विवाहानन्तरं गृहस्थाश्रमे वध्वै वस्त्रादिप्रदानस्योत्तरदायित्वं वरो गृह्णाति । पठितमन्त्रेषु यशसो दीर्घायुषो रायस्पोषस्यापि च चर्चा श्रूयते । तेन वस्त्रदानेन सह वरः सुवर्चो धनं दीर्घायुरपि च वस्त्रवत् स्वजीवने धारयितुं कन्यां प्रेरयति । यथा वरो वस्त्रैर्वधूमलङ्करोति तथैव स सुवर्चसादिभिरपि तं सुशोभयितुं प्रयततेति सूच्यते । किंच "या अकृन्तन्नवयन् या अतन्वत" इति मन्त्रेण स्वहस्तनिर्मितवस्त्रं "परिधास्यै यशोधास्यै" इत्यनेन च यशःपटमपि वरवध्वंधारयेतामित्यपि द्योत्यते । तयोः कीर्तिर्द्युलोके पृथिवीलोके राजपुरुषेषु विद्वत्सु च प्रसरेदिति तद्योग्यं कर्म ताभ्यां करणीयमित्यप्युपदिश्यते ।

**तुलना**—शाङ्खायनगृह्यसूत्रं[53] कन्यायै वस्त्रदानसमये निम्नमन्त्रं विनियोजयति—"रैभ्यासीदनुदेयी नाराशंसी न्योचनी । सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ।।" ऋ० 10.85.6, अ० 14.1.7 । अस्मिन्नेव गृह्यसूत्रे[54] आञ्जनकोशाद्युपहारदानकालेऽन्ये मन्त्रा अपि विनियुक्ताः । आपस्तम्बगृह्यसूत्रे[55] वस्त्रप्रदानविधौ निम्नमन्त्रो विनियुक्तः--"परि त्वा गिर्वणो

52- पा० गृ० 2.6.20-21
53- 1.12.3
54- 1.12.4-7
55- 2.4.8

गिर इमा भवन्तु विश्वतः। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ।।" ऋ० 1.10.12; यजु० 5.29। कौषीतकिगृह्यसूत्रं[56] वराय वस्त्रदानकाले निम्नमन्त्रं विनियोजयति—"युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः। अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे।।" ऋ० 1.152.1, गोभिलभारद्वाजाग्निवेश्यगृह्यसूत्रेषु[57] वस्त्रपरिधापनविधौ निम्नमन्त्रो विनियुक्तः—"परिधत्त धत्त वाससैनां शतायुषी कृणुत दीर्घमायुः। बृहस्पतिः प्रायच्छद्वास एतत् सौभाग्यं राज्ञे परिधातवा उ।।" अ० 2.13.2; 19.24.4। भारद्वाजाग्निवेश्यगृह्यसूत्रयोर्वस्त्रपरिधापनतः पश्चात् वरद्वारा वध्वो-रभिमन्त्रणमपि वर्णितं[58] निम्नमन्त्रेण—"परीदं वासो अधिधाः स्वस्तये भूरापीनामभिशस्तिपावती। शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्ती।।" द्र०–अ० 19.24.6, इति।

## 7- अग्निप्रदीपनम्

यावद् वधूर्वस्त्राणि धारयति तावत् कार्यकर्त्ता कश्चिदन्यो वा यज्ञमण्डपं गत्वा इध्मेन कर्पूरेण घृतेन वा यज्ञकुण्डस्याग्निं प्रदीपयति। अग्निप्रदीपनविधिः संस्कारविधेः सामान्यप्रकरणे प्रदर्शितः। एवमग्निं प्रदीप्य सुगन्धिघृतं पात्र आधाय कुण्डाग्निना प्रताप्य कांस्यपात्रे स्थापयेत्। स्रुवादियज्ञपात्राणि जलपात्राणि च संगृह्य यज्ञकुण्डस्य समीपे निदध्यात्।[59] कलशपुरुषस्य, दण्डपुरुषस्य, लाजाशूर्पग्रहीतुश्चो-पवेशनपि तत्र विवाहमण्डपे यज्ञकुण्डस्य समीप एव कारयेत्।

**विशेषः**—स्वामिदयानन्देन वरवधूभ्यां वस्त्रधारणानन्तरम् अग्नि-प्रदीपनविधिः प्रतिपादितः। अग्निप्रदीपनानन्तरञ्च समञ्जनपूर्वकं चतुर्भिर्मन्त्रैर्यज्ञकुण्डस्य प्रदक्षिणामात्रं वरवधूभ्यां कर्त्तव्यं दर्शितम्। ततः पुनर्विवाहयज्ञप्रकरणेऽग्न्याधानादिविधीनामुल्लेखः कृतः। प्रदक्षिणासमये चाहुतयो नैव प्रदीयन्ते। अतोऽत्रेयं जिज्ञासा यद्वस्त्र-धारणानन्तरम् अग्निप्रदीपनविधेः का आवश्यकता ? अत्र "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति न्यायेन प्रदीप्ताग्निकुण्डस्यैव प्रदक्षिणा स्यान्न तु यज्ञकुण्डमात्रस्यैवेत्यभिप्रायः। गृहस्थजीवने

56- 1.8.3

57- क्र०-2.1.18; 1.13; 1.6.1

58- क्र०-1.13; 1.6.1

59- तु०-गो० गृ० 2.1.13-16

सुरक्षाभारवहनञ्च वरस्य कर्त्तव्यं भवतीति दण्डपुरुषस्थापनया सूच्यते। जलकुम्भोऽन्तःशान्तेर्दण्डो बाह्योपद्रवशमनस्य च प्रतीकमस्तीत्यपि सूच्यते।

तुलना—पारस्करगृह्यसूत्रं[60] कन्यादानविधेरनन्तरं वरवध्वोः परस्परसमीक्षणविधिं प्रतिपादयति, निम्नमन्त्रपाठञ्च वर्णयति—"अघोरचक्षुरपतिघ्नी०; सोमः प्रथमो विविदे०; सोमो ददद्०; सा नः पूषा०", ऋ० 10.85.44,40,41,37। आश्वलायनगृह्यसूत्रे परिशिष्टभागे समीक्षणविधिर्विस्तरेण प्राप्यते। आपस्तम्ववौधायनगृह्यसूत्रे अपि[61] कन्यादानानन्तरं समीक्षणविधिं प्रतिपादयतः।

## 8- समञ्जनम्

अग्निप्रदीपनाद्यनन्तरं कार्यकर्त्ता सुवस्त्रालंकृतां कन्यां वरसम्मुखमानयति। वधूवरौ च निम्नमन्त्रं पठतः—

ओम् समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ॥[62]

मन्त्रार्थः—विश्वेदेवाः सर्वे विद्वांसः नौ आवयोः हृदयानि चेतांसि समञ्जन्तु परस्परं मेलयन्तु स्नेहभावापन्नानि कुर्वन्तु। आपः जलानि नौ हृदयानि समञ्जन्तु। मातरिश्वा वायुः नौ हृदयानि संदधातु संयोजयतु। धाता द्यावापृथिव्योर्धारयिता सूर्यः जगद्धारयिता परमात्मा वा नौ हृदयानि संदधातु संमेलयतु। देष्ट्री उपदेष्टा पुरोहितश्च नौ हृदयानि समु दधातु।[63]

अभिप्रायः—यथा जलं स्निग्धगुणेन, वायुर्गतिगुणेन, सूर्यस्तेजोगुणेन पदार्थान् परस्परं संयोजयति, परमेश्वरश्च स्वेक्षणवलेन त्रिगुणात्मिकां प्रकृतिं संदधाति तथैवावयोर्वरवध्वोर्हृदयमप्येते विश्वेदेवाः विशेषेण संयुक्तं स्नेहापन्नं कुर्वन्तु।

---

60- पा० गृ० 1.4.16
61- क्र०-4.4; 1.24-25
62- ऋ० 10.85.47; पा० गृ० 1.4.14; शा० गृ० 1.12.5
63- अस्य मन्त्रस्य महर्षिकृतव्याख्यानं संस्कारविधौ तत्प्रकरणे टिप्पण्यां द्रष्टव्यम्।

# 9- वरवधूभ्यां यज्ञकुण्डस्य प्रदक्षिणा

ततो वरः स्वदक्षिणहस्तेन वध्वा दक्षिणहस्तमुपगृह्य—

ओं यदैषि मनसा दूरं दिशोऽनुपवमानो वा ।
हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु असौ ।।[64]

इति मन्त्रं पठति ।

अत्र जयरामः—हे कन्ये यद्यतस्त्वं पितृगृहाद्दूरमेषि आगच्छसि मनसा अनुकूलया मनोवृत्त्या दिशः प्राच्याद्या अनु पवमानो वायुरिव । वाशब्द उपमार्थे । अतः स वायुः त्वा त्वां मन्मनसां मदेकनिष्ठवृत्तां करोतु । किंभूतः हिरण्यम् ऊर्जस्वत्पर्णं पतनं यस्य, विशिष्टः कर्ण आश्रयो यस्य सः । वायोरपि स्वकारणगुणसंबन्धात् कर्णाश्रयत्वम् । विकर्ण एव वैकर्णः स्वार्थे अण् । असाविति कन्यानाम ग्रहणं वरेणैव मन्त्रान्ते हे अमुकीत्येवम् ।

"पवमानः पवित्रो वायुः हिरण्यपर्णः सुवर्णवत् तेजोमयकिरणः वैकर्णः विकरोति विशेषेण गृह्णाति स्वकिरणैर्जलादिपदार्थान् स सूर्यश्च वा यथा दूरं दूरस्थपदार्थान् दिशोऽनुदिशश्च प्राप्नोति तथैव यत् त्वं हे वधु मां मनसा प्रेम्णा एषि प्राप्नोषि तां त्वा त्वां स परमेश्वरः मन्मनसां मम मनोऽनुकूलां करोतु विदधातु इति वरोक्तिः। तथैव कन्यापि भावयति—स परमेश्वरः त्वां पतिं मन्मनसं करोत्विति दयानन्दः ।[65]

ततो गृहमध्यान्मण्डपस्थयज्ञकुण्डसमीपं सहस्तग्राहम् उभौ समागच्छतः । तत्र च वरो निम्ननिर्दिष्टं मन्त्रयुगलमुच्चारयति, उभौ च यज्ञकुण्डस्य प्रदक्षिणां कुरुतः ।

ओं भूर्भुवः स्वः । अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवृकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ।।[66]

---

64- पा० गृ० 1.4.15; "असौ" स्थाने कन्यानाम वदेदिति दयानन्दः ।

65- द्रष्टव्यः संस्कारविधौ टिप्पण्यां कृतो हिन्दीभाषार्थः ।

66- ऋ० 10.85.44, व्याहृतिरहितो मन्त्रपाठः । पा० गृ० 1.4.16; तु०-अ० 14.2.17

ओं भूर्भुवः स्वः। सा नः पूषा शिवतमामैरय सा न ऊरु उशती विहर।
यस्यामुशन्तः प्रहराम शेफं यस्यामु कामा बहवो निविष्ट्यै ॥[67]

**मन्त्रार्थः**—यः परमेश्वरः भूः प्राणदाता, भुवः सर्वदुःखहर्त्ता, स्वः सुखस्वरूपः सुखदाता च वर्त्तते तस्येशस्य कृपया स्वपुरुषार्थेन च त्वं हे वरानने, अघोरचक्षुः प्रियदृष्टिः एधि भव। अपतिघ्नी पतिं न हन्ति इति तादृशी पतिं प्रति विरोधं न कुर्वाणेत्यर्थः भव। पशुभ्यः चतुष्पाद्भ्यः शिवा हितैषिणी भव। सुमनाः पवित्रान्तःकरणा प्रसन्नचित्ता च, सुवर्चाः शुभगुणकर्मस्वभावयुता विद्यया प्रकाशिता च, वीरसूः वीरप्रसवा, देवृकामा देवराकांक्षिणी, स्योना सुखवती च भूत्वा नः द्विपदे मनुष्यवर्गाय चतुष्पदे गवादिपशुवर्गाय च शं सुखहेतुर्भव। तथैवाहं वरोऽपि वर्त्तेयम्।[68]

भुर्भुवः स्वर्गुणैर्युक्तः परमेश्वरो मया स्मर्यते। सा वधूः नः मम पूषा पोषयित्री भवतु। हे परमेश्वर! शिवतमां कल्याणगुणशीलसम्पन्नां तां वधूं नः अस्मान् प्रति त्वम् ऐरय प्रापय। यद्वा पूषा इति देवतावाचि पदम्। सा पूषा देवता पोषकः परमेश्वरः नः मह्यं शिवतमाम् एनां वधूं ऐरय आगमयतु प्रापयतु, वचनव्यत्ययः। सा त्वं वधूः उशती पुत्रकामा सती नः अस्माकम् ऊरु सक्थ्नोः विहर। यस्यां त्वयि उशन्तः पुत्रकामा वयं शेफं शिश्नं प्रहराम प्रवेशयेम। यस्यां त्वयि उ निश्चयेन बहवः कामा धर्मार्थकाममोक्षरूपाः निविष्ट्यै व्यापकाय सुखाय सन्ति।

ततः कुण्डस्य पश्चिमभागे, पूर्वस्थापितासने, पूर्वाभिमुखं, वामभागे वरो दक्षिणभागे च वधूरुपविशतः। तदानीं वधूर्निम्नमन्त्रं पठति—

ओं प्र मे पतियानः पन्थाः कल्पतां शिवाः
अरिष्टा पतिलोकं गमेयम् ॥[69]

**मन्त्रार्थः**—मे मह्यं पतियानः पतिप्रापकः पन्थाः मार्गः प्रकल्पताम् सिद्ध्यतु। अहं शिवा मङ्गलमयी अरिष्टा अक्षता हानिरहिता च सती पतिलोकं पतिगृहं गमेयम् प्राप्नुयाम्।

---

67- "तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति। या न ऊरु उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्।" इति ऋग्वेदीयः पाठः, 10.85.37, तु०-अ० 14.2.38; पा० गृ० 1.4.16

68- द्रष्टव्यः-संस्कारविधौ टिप्पण्यां महर्षिकृतो भावार्थः।

69- मं० ब्रा० 2.1.8

अभिप्रायः—एवं कन्यापरिग्रहण-वस्त्रदानविधेरनन्तरं वरवधूभ्यां कृता यज्ञकुण्डप्रदक्षिणेयं सूचयति यद् वध्वाः पतियानः पन्थाः वरस्य च वधूयानः पन्थाः साम्प्रतं प्रारभ्यते, स निर्विघ्नः सन् प्रक्लृप्तामिति। प्रदक्षिणानां विषयेऽधिकमुपरिष्टात् प्रतिपादयिष्यते।[70]

तुलना—खादिरगृह्यसूत्रं[71] लाजाहोमानन्तरं "समञ्जन्तु" इति मन्त्रपाठं प्रतिपादयति। कलशपुरुषद्वारा वरवध्वोर्मस्तिष्के जलसेचनकाले च वरवध्वौ सम्मिलितरूपेण मन्त्रमिमं जपतः। गोभिलगृह्यसूत्रमपि[72] अस्मिन्नेव विधौ मन्त्रमिमं विनियोजयति। आश्वलायनगृह्यसूत्रे[73] मन्त्रोऽयं वरवध्वोर्दधिभक्षणकाले विनियुक्तः, किं च, अवशिष्टाज्येनोभयोर्हृदयदेशस्यानुलेपनार्थमपि मन्त्रस्तत्र वर्णितः। आपस्तम्बगृह्यसूत्रे[74] चतुर्थीकर्मणि पतिर्मन्त्रमिममुच्चारयन् स्वस्य पत्न्याश्च हृदयमनक्ति।

एवमत्र प्रारम्भिकविधयः समाख्याताः। परस्मिन्नध्यायेऽस्माभिर्विवाहयज्ञारम्भो होमाश्च व्याख्यास्यन्ते।

o:—:o

70- पञ्चमाध्याये।
71- खा० गृ० 1.3.30
72- गो. गृ० 2.2.14
73- आ० गृ० 1.8.9
74- आप० गृ० 3.8.10

# चतुर्थोऽध्यायः

## 1- आचमनम्, अग्न्याधानम्, समिदाधानम् आहुतयश्च

अथ यज्ञकुण्डस्य दक्षिणभागे उत्तराभिमुखं पुरोहितमुपवेशयन्ति। ततः "ओम् अमृतोपस्तरणमसि स्वाहा" इत्यादिभिस्त्रिभिर्मन्त्रैर्वरो वधूः पुरोहितः कार्यकर्त्तारश्च त्रीण्याचमनानि कुर्वन्ति। हस्तौ मुखं च प्राक्षाल्य ते "ओं भूर्भुवः स्वर्द्यौरिव भूम्ना०" इति मन्त्रेण अग्न्याधानं "ओम् अयन्त इध्म आत्मा०" इत्यादिभिर्मन्त्रैर्यज्ञकुण्डस्य पूर्वपश्चिमोत्तरदिक्षु "ओं देव सवितः प्रसुव यज्ञम्०" इत्यनेन च कुण्डं परितः दक्षिणहस्ताञ्जलिना शुद्धजलं सिञ्चति। अनन्तरं प्रदीप्यमानासु समित्सु चतस्र आघारावाज्यभागाहुतीः, चतस्रो व्याहृत्याहुतीश्च जुह्वति। हुत्वा च परस्तात् प्रधानहोमः प्रारभ्यते।

**अभिप्रायः** — वैदिकसंस्कृतौ विवाहः खल्वग्निसाक्षिकं कर्म, अतोऽग्निः प्रदीप्यते। न ह्यन्यसम्प्रदायवत् कुत्राऽपि देवमन्दिरं न्यायालयादिकं वा गत्वा निरग्नि विवाहबन्धनं स्वीक्रियते। अग्निप्रज्वालनमेतस्य प्रतीकं यद् गृहस्थाश्रमेऽस्माकं कर्तव्याग्निरपि सततं प्रज्वलन्नेव स्थास्यति, अग्निहोत्राग्निरपि च प्रत्यहं प्रातः सायं प्रज्वलिष्यति, यथा शुष्काः प्रकाशरहिताश्च समिधो वह्निपतिताः प्रकाशिता जायन्ते तथैव वरवध्वोः सन्तानादिकस्य च हृदयानि प्रकाशमेष्यन्तीति। अग्न्याधानं कुर्वन्तौ वधूवरो "द्यौरिव भूम्ना पृथिवीव वरिम्णा" इत्यादर्शं स्वमनसि स्थापयतः। द्यौर्यथा तारकादिभिर्बहुला, यथा च भूमिर्विस्तारवती तथैवावां विपुलसमृद्धिमन्तौ विशालहृदयौ च स्थास्यावः। पश्चात् "चेद्ध वर्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय" इति समिधमादधतौ प्रजादिसमृद्धि प्रार्थयतः। ततः कुण्डं परितो विभिन्नदिक्षु जलसेचनविधिना आग्नेयगुणकर्मस्वभावैः सह सौम्यगुणकर्मस्वभावानप्यावां धारयिष्यावः इत्यादि सूच्यते। तदनन्तरम् आहुतिप्रदानद्वारा दानादिभावना हृदये धार्यन्ते।

# 2- प्रधानहोमः

**क- पञ्चाज्याहुतयः**

वधूः स्वदक्षिणहस्तेन वरस्य दक्षिणस्कन्धं स्पृशति, अधो निर्दिश्यमानैः पञ्चभिर्मन्त्रैश्च वधूवरौ यज्ञाग्नौ पञ्चाज्याहुतीः प्रयच्छतः।

**अभिप्रायः**—वधूद्वारा वरस्य दक्षिणांसस्पर्शेन वरवध्वोः संपोषकसंपोष्यभावः प्रदर्श्यते। पतिः पालयिता भवति, स हि पत्नीपोषणभारं स्वस्कन्धे वहति। यथोक्तं वेदे "ममेयमस्तु पोष्या", अ० 14.1.52, इति। कोऽपि भारः स्कन्धेनैवोह्यते। पत्नीभरणभारस्य वहनं वरस्य कर्तव्यमिति बोधयितुं प्रतीकरूपेणायं विधिः सम्पाद्यते। दक्षिणहस्तेनैव स्पर्शस्तु दक्षिणहस्तस्य समृद्धिसूचकत्वात्, उत्साहयुक्तत्व-दानशीलत्वादिद्योतनाच्च। यथाह निरुक्तकारः—"दक्षिणा दक्षतेः समृद्धिकर्मणो व्यृद्धं समर्द्धयतीति। दक्षिणो हस्तो दक्षतेरुत्साहकर्मणः। दाशतेर्वा स्याद् दानकर्मणः, (1.6)। दक्षिणहस्तः खलु दानादिना व्यृद्धं धनहीनं समर्धयति। दक्षिणो हस्तो वामापेक्षया उत्साहयुक्तः शीघ्रकारी चञ्चलश्च भवति, दक्ष वृद्धौ शीघ्रार्थे च—भ्वादिः। दक्षिणहस्तेन च दानादयो दीयन्ते। दक्षिणहस्तश्च पवित्रोऽपि मन्यते। अतो दक्षिणेनैव हस्तेन स्पर्शविधिः। दक्षिणस्कन्धस्यैव स्पर्शे तु स्कन्धस्यापि हस्तमूलत्वात् उपर्युक्तमेव तात्पर्यम्, विधिसौकर्यार्थञ्च। अनेन विधिना पत्नी पतिमाश्वासयति यत्—यथा दक्षिणहस्तः प्रायः सर्वाणि कार्याणि साध्नोति तथैवाहं तव दक्षिणहस्तवत् वर्त्ते। गृहस्थजीवने आपत्सु संपत्सु च ते सहयोगिनी भवन्ती सर्वकार्याणि साधयिष्यामीति।

**मन्त्राः**—

ओं भूर्भुवः स्वः। अग्न आयूंषि पवस आ सुवोर्जमिषं च नः।
आरे बाधस्व दुच्छुनां स्वाहा॥
इदमग्नये पवमानाय इदं न मम॥ 1॥

**मन्त्रार्थः**—हे अग्ने परमात्मन् यज्ञाग्ने वा त्वम् अस्माकम् आयूंषि जीवनानि पवसे पवित्रयसि। नः अस्मान् ऊर्जं बलं, पराक्रमं, रसं, प्राणं

वा, ऊर्जं बलप्राणनयोः[2], इषम् अन्नविज्ञानादिकं च[3] आसुव प्रापय। दुच्छुनां दुर्गतिं दुष्टशत्रून् कुविचारांश्च आरे दूरे बाधस्व अपनय। एतन्मन्त्रपाठेन वरवधूभ्याम् आयुर्वर्धनाय अन्नबलविज्ञानादिप्राप्त्यै च यत्नो विधेय इति सूच्यते।

ओं भूर्भुवः स्वः। अग्निर्ऋषिः पावमानः पाञ्चजन्यः पुरोहितः।
तमीमहे महागयं स्वाहा ॥ इदमग्नये पवमानाय इदं न मम ॥ 2 ॥

**मन्त्रार्थः**—अग्निः अग्रणीः परमेश्वरः ऋषिः द्रष्टा सर्वज्ञः, पवमानः पावित्र्यसंपादकः, पाञ्चजन्यः ब्राह्मणादिपञ्चजनेभ्यो हितकरः, पुरोहितः पुरः सर्वेषां पुरतः निहितः स्थितो वर्त्तते। तथैव अग्निः यज्ञाग्निरपि ऋषिः गतिशीलः, पवमानः सुगन्धादिद्वारा पवित्रतादायकः, पाञ्चजन्यः "पञ्चजना मम होत्रं जुषध्वम्" ऋ० 10.53.4, इति मन्त्रोक्तन्यायेन याज्ञिकेभ्यः पञ्चजनेभ्यो हितकरः, पुरोहितः पुरस्ताद् यज्ञकुण्डे निहितो भवति। तं महागयं विशालब्रह्माण्डरूपगृहं, श्रेष्ठसन्तानं, विपुलधनं, महाप्राणं वा परमेश्वरम्, विशालयज्ञगृहं, श्रेष्ठसन्ततिप्रदायकं, विपुलप्रकाशरूपधनं, महाप्राणशक्तिदातारं यज्ञाग्निं च[4] वयम् ईमहे प्राप्नुमः। एवंविधगुणगणविशिष्टेन गृहस्थेनापि भाव्यमिति द्योत्यते।

ओं भूर्भुवः स्वः। अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्।
दधद्रयिं मयि पोषं स्वाहा ॥ इदमग्नये पवमानाय इदं न मम ॥ 3 ॥

**मन्त्रार्थः**—हे अग्ने परमेश्वर यज्ञाग्ने वा, स्वपाः शोभनकर्मा त्वम्, अपः इति कर्मनाम, निघं० 2.1, अस्मे अस्मासु सुवीर्यं शुभबलोपेतं वर्चः तेजः पवस्व प्रापय। स त्वं मयि रयिम् ऐश्वर्यं पोषं पुष्टिं च दधत् धारयन् भव। एतेन वरवधूभ्यां गृहस्थाश्रमे शोभनकर्माण्याचरणीयानि, बलतेजोधनपुष्ट्यादि च संग्राह्यमिति सूच्यते।

ओं भूर्भुवः स्वः। प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा ॥
इदं प्रजापतये इदं न मम ॥ 4 ॥

---

2- "ऊर्जे पराक्रमोत्तमरसलाभाय" इति यजु० 1.1 भाष्ये दयानन्दः।

3- "इषे अन्नविज्ञानयोः प्राप्तये" इति तत्रैव दयानन्दः। "इषमित्यन्ननाम" निघं० 2.7, इषं विज्ञानम्, इष गतौ, सैव गत्यर्था विज्ञानार्थाः।

4- गय इति अपत्यनामसु, धननामसु, गृहनामसु च पठितम्, निघं० 2.2; 2.10; 3.4, "प्राणा वै गयाः" इति शत० 14.8.15.7






मन्त्रार्थः—हे प्रजापते प्रजापालक परमेश्वर ! त्वद् अन्यः त्वद्व्यतिरिक्तः कश्चिद् एतानि ता तानि विश्वा जातानि जगतः समस्तानुत्पन्नपदार्थान् न परिबभूव न व्याप्नोति। अतो यत्कामाः यदभिलाषुका वयं ते तुभ्यं जुहुमः अग्नौ हवींषि प्रयच्छन्तः आत्मसमर्पणं कुर्मः, तत् फलं नः अस्तु भवतु। वयं रयीणाम् समस्तविद्यान्यायधनाद्यैश्वर्याणां पतयः स्वामिनः स्याम इति वरवधूभ्यां प्रार्थ्यंते। गृहपतिरपि प्रजापतिरुच्यते। वरो गृहस्थाश्रमे यदा गृहपतिपदं प्राप्स्यति तदा तेनापि मन्त्रोक्तदिशा व्यवहर्त्तव्यमिति सूच्यते।

ओं भूर्भुवः स्वः। त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन् गुह्यं बिभर्षि। अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि स्वाहा॥ इदमग्नये इदन्न मम॥ 5॥

मन्त्रार्थः—अग्ने हे परमेश्वर यज्ञाग्ने वा, यत् यस्मात् त्वं कनीनां कन्यानाम् अर्यमा नियामकोऽसि, किंच हे स्वधावन् आत्मधारणशक्तिसम्पन्नपरमेश्वर हविष्यान्नवन् यज्ञाग्ने वा यस्मात् त्वं गुह्यं रहस्यमयं नाम यशः बिभर्षि धारयसि, यत् यस्माच्च त्वं दम्पती जायापती समनसा समानमनस्कौ दृढप्रीती कृणोषि, तस्मात् सुधितं सुष्ठु हितकारकं मित्रं न सुहृदमिव त्वां गोभिः वाग्भिः जनाः अञ्जन्ति व्यक्तिकुर्वन्ति तव गुणान् प्रकाशयन्तीत्यर्थः। परमेश्वरस्य यज्ञाग्नेश्च यशः स्मरन्तौ वरवध्वौ समनस्कौ भवेतामिति द्योत्यते।

उपर्युक्तपञ्चाज्याहुतिमन्त्रेषु गृहस्थजीवनस्योन्नतये आवश्यकगुणाः वर्णिताः। वधूवरौ वह्नि साक्षीकृत्य तत्सम्मुखे उक्तगुणान् धारयितुमाहुतीर्जुहुतः, ईश्वरश्चापि ताभ्यां अस्मिन् कर्मणि सहयोगाय प्रार्थ्यते।

## ख- द्वादश राष्ट्रभृदाज्याहुतयः

अधोलिखिता द्वादशाहुतयः राष्ट्रभृदाहुतयः सन्तीति पारस्करगृह्यसूत्रे वर्णितम्।[5] राष्ट्रभृत्संज्ञा आहुतीर्जुहोतीति सायण उवटश्च।[6] संस्कारविधिपठिता अधोनिर्दिष्टमन्त्रा यजुर्वेदात् संगृहीताः, ते च तत्र

5- पा० गृ० 1.5.7; द्र०—श० ब्रा० 9.4.1

6- द्र०—सायणोवटभाष्यम्, मन्त्रविभाजनप्रकारोऽपि द्रष्टव्यः।

7- यजु० 18.38, 43; द्र०—तै० सं० 3.4.7; मै० सं० 2.12.2; का० सं० 18.14

षट्संख्यकाः ।[7] संस्कारकाले तु ते विभज्य द्वादशसंख्यका विधीयन्ते । प्रस्तुतमन्त्रेषु अग्निः-ओषधयः, सूर्यः-मरीचयः, चन्द्रमाः-नक्षत्राणि, वातः-आपः, यज्ञः-दक्षिणा, मनः-ऋक्सामानि, इत्येतानि परस्परं गन्धर्वाप्सरसः प्रोक्ताः । अप्सरसः खल्वत्र गन्धर्वाणां पत्नीरूपेण वर्णिताः । अत्र क्रमशः एकैकं मन्त्रयुगलमुद्धृत्य तद्व्याख्यानं विधीयते ।

ओम् ऋताषाड् ऋतधामाग्निर्गन्धर्वः ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।
इदमृताषाहे ऋतधाम्नेऽग्नये गन्धर्वाय-इदं न मम ॥ 1 ॥
ओम् ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ।
ताभ्यः स्वाहा ॥ इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यः-इदं न मम ॥ 2 ॥

**मन्त्रार्थः**—अग्निर्गन्धर्वो भवति गां पृथिवीं वाचं वा धरतीति । "गानाद्वा गन्धर्वोऽग्निः" ।[8] स चाग्निः ऋताषाट् ऋतं सत्यं सहते । कथं सत्यं सहते ? अनृते कुपितो मर्यादारहितो भवतीत्यर्थः, अग्निसत्तया हि जनो दुष्टेभ्यः कुप्यति । ऋतधामा ऋतं यथार्थमविनश्वरं धाम स्थानं यस्य सः, अग्नेराकाशदेशत्वात् आकाशस्य चाक्षरत्वात् । तस्याग्निरूपस्य गन्धर्वस्य ओषधयः व्रीहियवाद्याः अप्सरसः "अप्सु सरन्ति वृद्धिं गच्छन्तीति" तादृश्यो भवन्ति । ओषधयो गन्धर्वाणां स्त्रीत्वेन वर्त्तन्त इति भावः । ताः ओषधयो मुदो नाम । मोदन्ते जना याभिस्ताः । "ओषधयो हि मुद ओषधीभिर्हीदं सर्वं मोदते" इति शातपथी श्रुतिः ।[9] ओषधयो हि अग्नेः स्त्रीवद् भर्तव्या भोग्याश्च । विनाग्निमोषधीनां स्थितिरसम्भवा, औषधीर्विना चाग्नेर्ज्वाला अदृश्याः । वरोऽग्निवत् तेजस्वी तद्वधूश्चौषधिवत् संतापनिवारिका, रसमयी, पुष्टिप्रदाऽऽश्रयणशीला च भवेदिति द्योत्यते ।

ओं संहितो विश्वसामा सूर्यो गन्धर्वः ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥
इदं संहिताय विश्वसाम्ने सूर्याय गन्धर्वाय-इदं न मम ॥ 3 ॥
ओं संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ।
ताभ्यः स्वाहा ॥ इदं मरीचिभ्योऽप्सरोभ्यः आयुभ्यः-इदं न मम ॥ 4 ॥

---

8- उवटभाष्यम्
9- श० 9.4.1.7

**मन्त्रार्थः**—सूर्यो गन्धर्वो भवति गां पृथिवीं ग्रहोपग्रहयुक्तं सकलं सौरमण्डलं किरणांश्च धरतीत्यतः। स च संहितः तैः सर्वैर्मिलितः। यद्वा अहोरात्रे संदधाति सम्यग्धारयतीति संहितः।[10] विश्वसामा विश्वमखिलं साम सन्निधौ यस्य सः। यद्वा विश्वं साम सामञ्जस्यं येन स विश्वसामा, सूर्येणैव पृथिव्यां सर्वेषु पदार्थेषु ग्रहोपग्रहादीनां च परस्परं सामञ्जस्यं जायते इत्यतः। एतादृशस्य सूर्यरूपस्य गन्धर्वस्य मरीचयः दीधितयः अप्सरसः अप्सु अन्तरिक्षे सरन्ति ताः स्त्रीत्वेन वर्त्तन्ते।[11] ताः मरीचयः आयुवः नाम। मरीचयो हि आ समन्तात् यूयन्ते मिश्रीभवन्ति, युवन्ती मिश्रयन्ति च, तस्मात् आयुवः पदार्थानां संयोजिका वियोजिकाश्च।[12] यु मिश्रणामिश्रणयोः। वरः साक्षात् सूर्यः तद्वधूश्च मरीचिवत् तदङ्गभूता, प्रकाशमयी, प्रकाशप्रदा, रूपादिकर्त्री, गुणग्राहिणी, सन्तानानां पालयित्री च भवत्विति सूच्यते।

ओं सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्।
इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय-इदं न मम ॥ 5 ॥
ओं सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम।
ताभ्यः स्वाहा॥ इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः-इदं च मम ॥ 6 ॥

**मन्त्रार्थः**—चन्द्रमा गन्धर्वो भवति, गाः सूर्यरश्मीन् धरतीति, यद्वा गां पृथिवीं स्वज्योत्स्नया धरति पोषयति। स च सुषुम्णः शोभनं सुम्नं सुखं यस्मात् सः, "सुम्नमिति सुखनाम" निघं० 3.6, सूर्यरश्मिः सूर्यस्य रश्मयः मरीचयः यस्मिन् सः। तस्य नक्षत्राणि अप्सरसः अप्सु अन्तरिक्षे सरणशीलाः अश्विन्यादयस्तारकाः स्त्रीरूपाः। भेकुरयः नाम। भां कान्तिं दीप्तिं कुर्वन्तीति भेकुरयः। "भेकुरयो नामेति भाकुरयो ह नामेति भां नक्षत्राणि कुर्वन्ति", श० 9.4.1.9। वरश्चन्द्रवत् सौम्यः, सुखजनकः, परमात्मसूर्यस्य भौतिकसूर्यस्य च रश्मीनां धारकः, स्त्री च नक्षत्रवत् भेकुरिर्भास्करणशीला भवेदिति व्यज्यते।

ओम् इषिरो विश्वव्यचा वातो गन्धर्वः।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥
इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय-इदं न मम ॥ 7 ॥

---

10- "असौ वा आदित्यः संहितः एष ह्यहोरात्रे संदधाति" श० 9.4.1.8
11- "सूर्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्मिथुनेन सहोच्चक्राम" श० 9.4.1.8
12- "आयुवाना इव हि मरीचयः प्लवन्ते" श० 9.4.1.8

ओम् इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो अप्सरस ऊर्जो नाम।
ताभ्यः स्वाहा ॥ इदमद्भ्योऽप्सरोभ्य ऊर्ग्भ्यः–इदं न मम ॥ 8 ॥

**मन्त्रार्थः**—वातः वायुः वाति गच्छतीति। सोऽपि गन्धर्वो भवति गां पृथिवीं, गाः उदकानि, गाः सूर्यमरीचीश्च धारयतीति। स च इषिरः इषति गच्छतीति, इषु गतौ, क्षिप्रगामी। विश्वव्यचाः विश्वस्मिन् जगति व्यचो व्याप्तिर्गमनं वा यस्य सः। तस्य वायुरूपस्य गन्धर्वस्य आपः जलानि अप्सरसः अप्सु अन्तरिक्षे सरन्तीति तादृश्यः पत्नीरूपेण भवन्ति। ता आपः ऊर्जो नाम। ऊर्जयन्ति जीवयन्ति बलयन्ति प्राणयन्ति, यद्वा ऊर्जयन्ति उत्पादयन्ति अन्नादिकम् इत्यूर्जः "आपो वा ऊर्जोऽद्भ्योऽह्यूर्ग्ं जायते" इति, श० 9.4.1.10। वरो वायुवत् गतिमान् कर्मण्यः, व्याप्तकीर्त्तिः, गुणगन्धधारकस्तत्प्रसारकश्च, शीतोष्णस्वभावग्रहीता, वधूश्च "आप०" इव शान्तस्वभावा, पवित्रा, मधुरा, तापापहर्त्री, दयार्द्रा, नम्रा, पत्युरनुव्रता भवेदिति लक्ष्यते।

ओं भुज्युः सुपर्णो यज्ञो गन्धर्वः।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्।
इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय इदन्न मम ॥ 9 ॥
ओं भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम।
ताभ्यः स्वाहा ॥ इदं दक्षिणाभ्योऽप्सरोभ्यः स्तावाभ्यः-इदन्न मम ॥ 10 ॥

**मन्त्रार्थः**—यज्ञो गन्धर्वो भवति गां पृथिवीं धरतीति, यद्वा गां वेदरूपां वाचं धारयति, मन्त्रोच्चारणपुरःसरं यज्ञविधानात्। स च भुज्युः भुज्यन्ते सुखानि यस्मात्, यद्वा भुनक्ति पालयति भूतानि यः सः। "यज्ञो वै सर्वाणि भूतानि भुनक्ति" इति, श० 9.4.1.11। सुपर्णः शोभनं पर्णं उपरिपतनं यस्य सः, यद्वा शोभनानि पर्णानि पालनानि यस्मात् सः। तस्य यज्ञरूपस्य गन्धर्वस्य दक्षिणाः अप्सरसः अप्सु प्राणेषु सरन्ति, दक्षिणाभिर्हि विप्रैः प्राणा धार्यन्त इति भावः। ताश्च यज्ञरूपस्य गन्धर्वस्य पत्नीरूपाः। ताः दक्षिणाः स्तावा नाम। याः स्तूयन्ते प्रशस्यन्ते ताः, यद्वा याभिर्यज्ञो यजमानश्च स्तूयते ताः स्तावाः। दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञः स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत एव सः" इति, श० 9.4.1.11। वरो यज्ञवत् परोपकारपरायणः, वेदवाणीरक्षकः, परेषां भोजयिता, सुखदाता, लोकपालकः, ऊर्ध्वगन्ता, दोषनाशकः, वधूश्च दक्षिणावत् प्रशस्या, स्तुतिमयी, स्तोत्री च भवेदिति द्योत्यते।

ओं प्रजापतिर्विश्वकर्मा मनो गन्धर्वः ।
स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।
इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय-इदन्न मम ॥ 11 ॥

ओं प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ।
ताभ्यः स्वाहा ॥ इदमृक्सामेभ्योऽप्सरोभ्य एष्टिभ्यः-इदन्न मम ॥ 12 ॥

**मन्त्रार्थः**—मनः अन्तःकरणम् । सोऽपि गन्धर्वं उच्यते गवां वेदवाचां वागादीनां वा धारकत्वात् । तच्च प्रजापतिः प्रजायन्ते इति प्रजाः इन्द्रियाणि तासां पतिः स्वामी मनोऽधिष्ठितत्वादिन्द्रियाणाम् । विश्वकर्मा विश्वानि कर्माणि यस्य सः, यथोक्तम्—"येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः" यजु० 34.2, इति । तस्य मनोरूपस्य गन्धर्वस्य ऋक्सामानि अप्सरसः अप्सु हृदयप्रदेशेषु सरन्ति गच्छन्तीति ताः पत्नीरूपिण्यः सन्ति । तानि ऋक्सामानि एष्टयो नाम । इष्यन्ते प्राप्यन्तेऽभीष्टानि याभिस्ताः, इषु गतौ, यद्वा इष्यन्ते काङ्क्ष्यन्ते सुखसमृद्ध्यादीनि यद् द्वारा ताः, इषु इच्छायाम् । "ऋक्सामानि वा एष्टय, ऋक्सामैर्ह्याशास्त इति नोऽस्त्वित्थं नोऽस्त्विति", श० 9.4.1.12 ।

ते गन्धर्वाः ब्रह्म ब्रह्मशक्तिं क्षत्रं क्षात्रशक्तिं च पान्तु रक्षन्तु इति हेतोः तेभ्यः सर्वेभ्यः गन्धर्वेभ्यः स्वाहा इदमाज्यं सुहुतमस्तु । ताभ्योऽप्सरोभ्योऽपि वाट् वषट्कारेण सुहुतमस्तु । ता अपि ब्रह्मक्षत्रादिबलं वर्धयन्तु । एतेन गृहस्थजीवने ब्रह्मबलं क्षात्रबलं चोभयमप्यावश्यकमिति ध्वन्यते ।

इत्थं द्वादशराष्ट्रभृदाहुतयो विवाहसंस्कारस्य प्रधानहोमसमयेऽग्नौ हूयन्ते यजुर्वेदीयषण्मन्त्रात् विभज्य द्वादशाहुतिप्रदानं तु गन्धर्वेभ्योऽप्सरोभ्यश्च पृथक् पृथक् हवनमिष्टम् इत्यतः ।

उक्तमन्त्रेषु वरवधूभ्यां विशिष्टः कश्चनोपदेशः प्रदत्तः । यथाऽन्यौषध्यादयो गन्धर्वाप्सरसः परस्परमुपकुर्वाणा लोकं बिभ्रति तथैव जायापतिभ्यामपि राष्ट्रभरणपोषणकार्यं गृहस्थजीवने विधेयम् । यथा च ते गन्धर्वाऽप्सरसोऽन्योऽन्यमुत्कर्षयन्ति तथा वरवधूभ्यामपि परस्परं सहयोग उत्कर्षश्च विधेयः । अग्निसूर्यचन्द्रवायुयज्ञमनसां गन्धर्वाणाम् ओषधिमरीचिनक्षत्राऽब्दक्षिणर्क्सामनां चाप्सरसामादर्शं स्वजीवने संगृह्य वरवधूरूपं नवगन्धर्वाप्सरोयुगलमपि तत्प्रशस्तिभाग् भवेदिति सूच्यते ।

ग- जयाहोमः—

तदनन्तरं निम्ननिर्दिष्टैस्त्रयोदशमन्त्रैर्जयाहुतयो दीयन्ते—

ओं चित्तं च स्वाहा ।। इदं चित्ताय-इदन्न मम ।। 1 ।।
ओं चित्तिश्च स्वाहा ।। इदं चित्त्यै-इदन्न मम ।। 2 ।।
ओं आकूतं च स्वाहा ।। इदमाकूताय-इदन्न मम ।। 3 ।।
ओं आकूतिश्च स्वाहा ।। इदमाकूत्यै-इदन्न मम ।। 4 ।।
ओं विज्ञातं च स्वाहा ।। इदं विज्ञाताय-इदन्न मम ।। 5 ।।
ओं विज्ञातिश्च स्वाहा ।। इदं विज्ञात्यै-इदन्न मम ।। 6 ।।
ओं मनश्च स्वाहा ।। इदं मनसे-इदन्न मम ।। 7 ।।
ओं शक्वरीश्च स्वाहा ।। इदं शक्वरीभ्यः-इदन्न मम ।। 8 ।।
ओं दर्शश्च स्वाहा ।। इदं दर्शाय-इदन्न मम ।। 9 ।।
ओं पौर्णमासं च स्वाहा ।। इदं पौर्णमासाय-इदन्न मम ।। 10 ।।
ओं बृहच्च स्वाहा ।। इदं बृहते-इदन्न मम ।। 11 ।।
ओं रथन्तरं च स्वाहा इदं रथन्तराय-इदन्न मम ।। 12 ।।
ओं प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु ।
तस्मै विशः समनमन्त सर्वाः स उग्रः स ह हव्यो बभूव स्वाहा ।।
इदं प्रजापतये जयानिन्द्राय-इदन्न मम ।। 13 ।।[13]

मन्त्रार्थः—चित्तं प्रज्ञानं हृदयं वा[14], चिती संज्ञाने भ्वादिः। चित्तिः चेतना, यद्वा चित्तिः कर्म ।[15] आकूतम् उत्साहः ।[16] आकूतिः उत्साह-कारिका क्रिया, संकल्पो वा ।[17] विज्ञातं विज्ञानं परमेश्वरादारभ्य तृणपर्यन्तपदार्थेषु साक्षाद् बोधः ।[18] विज्ञातिः ज्ञानप्रापिकाशक्तिः क्रिया

---

13- तु०—पा० गृ० 1.5.9; आप० गृ० 2.12; वा० गृ० 14.21-23; मा० गृ० 10.11; तै० सं० 3.4.4; मै० सं० 1.4.14

14- "चित्तं प्रज्ञानाम" निघं० 3.9; "चित्तं चेततेः" निरु० 1:6; "चित्तानि प्रज्ञानानि" निरु० 9.33; द्र०-ऋ० 5.7.9; य० 34.5; 11.66, द० भा० ।

15- "चित्तिभिः कर्मभिः" निरु० 2.9

16- यजु० 18.58, द० भा० ।

17- ऋ० 10.191.4; सा० भा०, यजु० 11.66, द० भा० ।

18- ऋ० भा० भू०, वेदविषयविचारः ।

वा। मन: मन्यन्ते ज्ञायन्ते सर्वे व्यवहारा येन तदन्तःकरणम्।[19] मन ज्ञाने, मनु अवबोधने वा। शक्वर्य ऋचः शक्नोतेः। तद् यद् आभिर्वृत्रम- शकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते इति निरुक्तम्।[20] दर्शः अमावास्या भवति दृश्यते शास्त्रेणेति। तत्र क्रियमाणत्वादुप- चाराद्दर्शशब्देन दर्शयागोऽप्युच्यते।[21] पौर्णमासं पूर्णिमा पूर्णो मासोऽ- स्याम्। तत्र भवो यागोऽपि पौर्णमासः। बृहत् इति महन्नाम, निघं० 1.7। बृहदिति महतो नामधेयं परिवृढं भवति, निरु० 9.6। बृहत्त्वं महत्त्वं श्रैष्ठ्यं ज्यैष्ठ्यमित्यर्थः।[22] बृहदिति सामस्तोत्रविशेषोऽपि। रथन्तरशब्दः रथोपपदस्य तृधातोरप् प्रत्यये नुडागमे च सिद्ध्यति। यद् रथै रमणीयैः साधनैस्तारयति तद् रथन्तरम्। "यदस्मिन् लोके तारकं वस्त्वस्ति तद् रथन्तरमिति" दयानन्दः।[23] सामस्तोत्रविशेषो वा रथन्तरम्। "पृथिवी वै रथन्तरमिति" शतपथम्।[24] "वाग् वै रथन्तरम्", अन्नं वै रथन्तर- मिति" चैतरेयम्।[25] एतेभ्यः सर्वेभ्यः स्वाहा इदमाज्यं सुहुतमस्तु। एते दिव्याः पदार्था एता दिव्याश्च शक्तयो मह्यं प्राप्ता भवन्त्वित्यर्थः।

उग्रः उद्गूर्णबलः प्रजापतिः प्रजापालकः परमात्मा, वृष्णे यज्ञादिना इष्टवर्षयित्रे, इन्द्राय जीवाय, जयान् विजयान् प्रायच्छत् ददौ ततस्तस्मै इन्द्राय सर्वाः विशः प्रजाः समनमन्त सम्यङ् नेमुः। स इन्द्रः उग्रः प्रचण्डः स इ स एव च हव्यः सर्वैराह्वातव्यो बभूव। एवमावामपि गृहस्थजीवने सर्वत्र जयं प्राप्नुयावेत्यर्थः।

**घ- अभ्यातानहोमः**

ततोऽष्टादशाज्याहुतीरभ्यातानसंज्ञका जुहोति। अभ्यातानो विस्तारः। अभ्याङ्पूर्वात् तनु विस्तारे इति धातोर्भावे घञ्। अभ्यातानमन्त्रास्त्वेते[26]—

---

19- "मनो मनोतेः" निरु० 4.5

20- निरु० 1.8; द्र०-ऐ० ब्रा० 5.7; कौ० ब्रा० 23.2; तां ब्रा० 13.4.1

21- "दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक्" अमर० 2.7.48

22- "श्रैष्ठ्यं वै बृहत् ज्यैष्ठ्यं वै बृहत्" ऐ० ब्रा० 8.2

23- यजु० 15.5

24- श० 1.7.2.10

25- ऐ० ब्रा० 4.28; 8.1

26- तु०-पा० गृ० 1.5.10; का० गृ० 25,18, सूत्रेऽभ्यातानमन्त्रा आधिपत्या- ख्ययापि ज्ञायन्ते। तै० सं० 3.4.5

ओम् अग्निर्भूतानामधिपतिः स मावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्यां स्वाहा ॥ इदमग्नये भूतानामधिपतये-इदन्न मम ॥ 1 ॥

ओम् इन्द्रो ज्येष्ठानामधिपतिः स०··· · ······ ·····॥
इदमिन्द्राय ज्येष्ठानामधिपतये-इदन्न मम ॥ 2 ॥

ओं यमः पृथिव्या अधिपतिः स०············॥
इदं यमाय पृथिव्या अधिपतये-इदन्न-मम ॥ 3 ॥

ओं वायुरन्तरिक्षस्याधिपतिः स०··········· ॥
इदं वायवे अन्तरिक्षस्याधिपतये-इदन्न मम ॥ 4 ॥

ओं सूर्यो दिवोऽधिपतिः स०··· ··· ··· ॥
इदं सूर्याय दिवोऽधिपतये-इदन्न मम ॥ 5 ॥

ओं चन्द्रमा नक्षत्राणामधिपतिः स०········· ॥
इदं चन्द्रमसे नक्षत्राणामधिपतये-इदन्न मम ॥ 6 ॥

ओं बृहस्पतिर्ब्रह्मणोऽधिपतिः स० · ·· ····· · ॥
इदं बृहस्पतये ब्रह्मणोऽधिपतये-इदन्न मम ॥ 7 ॥

ओं मित्रः सत्यानामधिपतिः स० ······· ···॥
इदं मित्राय सत्यानामधिपतये-इदन्न मम ॥ 8 ॥

ओं वरुणोऽपामधिपतिः स०············· ·॥
इदं वरुणायापामधिपतये-इदन्न मम ॥ 9 ॥

ओं समुद्रः स्रोत्यानामधिपतिः स०·· ······ · ॥
इदं समुद्राय स्रोत्यानामधिपतये-इदन्न मम ॥ 10 ॥

ओं अन्नं साम्राज्यानामधिपतिः तत्० ···· ···॥
इदमन्नाय साम्राज्यानामधिपतये-इदन्न मम ॥ 11 ॥

ओं सोम ओषधीनामधिपतिः स०··· · ······ ॥
इदं सोमाय ओषधीनामधिपतये-इदन्न मम ॥ 12 ॥

ओं सविता प्रसवानामधिपतिः स०········· ॥
इदं सवित्रे प्रसवानामधिपतये-इदन्न मम ॥ 13 ॥

ओं रुद्रः पशूनामधिपतिः स०··· ···· ·····॥
इदं रुद्राय पशूनामधिपतये-इदन्न मम ॥ 14 ॥

ओं त्वष्टा रूपाणामधिपतिः स०··············॥
इदं त्वष्ट्रे रूपाणामधिपतये-इदन्न मम ॥ 15 ॥

ओं विष्णुः पर्वतानामधिपतिः स० ......... ॥
इदं विष्णवे पर्वतानामधिपतये-इदन्न मम ॥ 16 ॥

ओं मरुतो गणानामधिपतयस्ते मावन्तु० ... ॥
इदं मरुद्भ्यो गणानामधिपतिभ्यः-इदन्न मम । 17 ॥

ओं पितरः पितामहाः परेऽवरे ततास्ततामहा इह भावन्तु० ॥
इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यश्च इदन्न मम ॥ 18 ॥

**मन्त्रार्थः**—अग्निः भूतानामधिपतिः । अग्निः अग्रणीः परमेश्वरो जीवात्मा वा । परमात्मा भूतानां प्राण्यप्राणिनाम् अधिपतिः स्वामी पालकश्चास्ति । आत्मा खलु भूतानामिन्द्रियाणामधिपतिः स्वामी वर्त्तते । तपोऽप्यग्निरुच्यते "तपो वा अग्निः", श० 3.4.3.2, इति प्रामाण्यात् । एष भूतानामधिपतिः, इदं तपः भूतान्यूर्ध्वं गमयति, अतस्तेषामधिपतिः । संवत्सरोऽप्यग्निरुच्यते "संवत्सर एषोऽग्निः" श० 6.7.1.18, इति श्रुतेः । स च भूतानामृतूनामधिपतिः, "भूतानि ऋतवः", श० 6.1 3.8, इति ह ब्राह्मणम् ॥ 1 ॥

इन्द्रः ज्येष्ठानामधिपतिः । इन्द्रः परमैश्वर्यवान् परमेश्वरो जीवात्मा प्राणश्च ।[27] इन्दति परमैश्वर्यवान् भवतीति इन्द्रः, इदि परमैश्वर्ये । परमेश्वरः ज्येष्ठानामतिशयेन प्रशस्तानां महतां विदुषां सूर्यादीनां ज्यायसां पदार्थानाञ्चाधिपतिः । आत्मा प्राणश्च ज्येष्ठानां शरीरस्थानां प्रशस्यानामिन्द्रियाणां स्वामी । इत्यध्यात्मम् । राजा सेनाधीशश्चापि इन्द्र उच्यते परमैश्वर्यवत्त्वादेव । राजा ज्येष्ठानामधिकारिवर्गाणामधिपतिः, सेनाधीशश्च ज्येष्ठानां सैन्यानाम् । इत्यधिभूतम् । इन्द्रो विद्युत् भूतानां मेघजलानामधिपतिरित्यधिदैवतम् ॥ 2 ॥

यमः पृथिव्या अधिपतिः । अग्निर्यमः इत्युच्यते यच्छतीति सतः । "अग्निर्वै यमः", श० 7.2.1.10, "अग्निरपि यम उच्यते" नि० 10.20, इति प्रामाण्यात् । एष पृथिव्याः पृथिवीलोकस्याधिपतिः । पृथिवीलोकं ह्यसौ पालयति । चक्रवर्त्ती राजा वा यमो भवति नियन्त्रकत्वात् । एषोऽपि पृथिव्या अधिपतिः ॥ 3 ॥

वायुरन्तरिक्षस्याधिपतिः । वायुः पवनो भवति वाति गच्छतीति ।

27- "प्राणः इन्द्रः", श० 6.1.1.2

अयं मध्यस्थानीयो देव इति निरुक्तम्, (10.1)। सोऽन्तरिक्षलोकस्याधिपतिः। यथोक्तम्—"वायुर्वा अन्तरिक्षस्याऽध्यक्षः", (तै० 3.2.1.3) ॥ 4 ॥

सूर्यो दिवोऽधिपतिः। सूर्यः आदित्यो भवति। सूर्यः सर्तेर्वा सुवतेर्वा स्वीर्यतेर्वा इति निरुक्तम्, (12.14)। स दिवः द्युलोकस्याधिपतिः। यद्वा दिवो रश्मीनामधिपतिः। "दिवः द्योतनकर्मणामादित्यरश्मीनाम्" इति निरुक्तम्, (13.12) ॥ 5 ॥

चन्द्रमा नक्षत्राणामधिपतिः। चन्द्रमाश्चन्द्रो भवति, आह्लादनात्। चदि आह्लादे। एष नक्षत्राणां तारकगणानामधिपतिः ॥ 6 ॥

बृहस्पतिर्ब्रह्मणोऽधिपतिः। बृहस्पतिः परमेश्वरो विद्वान् आचार्यश्च। बृहतां बृहत्याः वा पतिः। परमेश्वरो बृहतामाकाशादीनां बृहत्या वेदवाचो वा पतिः। विद्वांश्च बृहतां शब्दराशीनां बृहत्या वेदवाचश्च पतिः। स बृहस्पतिः परमेश्वरः ब्रह्मणो वेदचतुष्टयस्याधिपतिः स्वामी।

मित्रः सत्यानामधिपतिः। मेद्यति स्निह्यति इति मित्रः परमेश्वरः। स सत्यानां सत्यज्ञानानां सत्याचरणानां च अधिपतिः। सूर्योऽपि मित्र उच्यते। "मित्रः प्रमीतेस्त्रायते सम्मिन्वानो द्रवतीति वा" इति निरुक्तम्, (10.21)। स हि प्रमीतेः मृत्योः त्रायते, संमिन्वानः सम्यग् वृष्टिजलं प्रक्षिपन् वृष्टिजलेन भूमिं सिञ्चन् वा द्रवति। सोऽपि सत्यानां सत्यनियमान्वितानां ग्रहोपग्रहादीनाम् अधिपतिः ॥ 8 ॥

वरुणोऽपामधिपतिः। वरुणः परमेश्वरः, यः सर्वान् शिष्टान् मुमुक्षून् धर्मात्मनो वृणोति, अथवा यः शिष्टैर्मुमुक्षुभिर्धर्मात्मभिर्व्रियते वर्यते वा सः। स परमेश्वरः अपाम् आप्तानां प्रजानाम् अधिपतिरस्ति। सूर्योऽपि वरुणो भवति व्रियते ज्योतिषा वारयति च तमः, यद्वा वृणोत्याच्छादयति आकाशम्। वरुणो वृणोतीति सतः, 10.3, इति निरुक्तम्। एष अपां जलानाम् अधिपतिस्तासां वर्षकत्वात्। राजाऽपि वरुण इत्युच्यते व्रियते निर्वाच्यते प्रजाभिरिति। स राजा अपां प्रजानाम् अधिपतिः। यद्वा अपां शान्तीनाम् अधिपतिः, साम्राज्ये शान्तिस्थापनात्। "शान्तिर्वा आपः", ऐ० 7.5 इति ब्राह्मणम्। यद्वा वरुणो विद्वान् आचार्यः सोऽपि व्रियते शिष्यैः। स चापां ज्ञानानाम् अधिपतिः ॥ 9 ॥

समुद्रः स्रोत्यानामधिपतिः। समुद्रः भूमिष्ठः सागरोऽन्तरिक्षं वा अन्तरिक्षनामसु तत्पाठात्, निघं० (1.3)। "समुद्रः कस्मात् समुद्द्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः सम्मोदन्तेऽस्मिन् भूतानि समुदको भवति समुनत्तीति

वा" इति निरुक्तम्, (2.10)। सः स्रोत्यानां नदीनां मेघधाराणामधिपतिः ॥ 10 ॥

अन्नं साम्राज्यानामधिपतिः। अन्नं तण्डुलादिकं भोज्यम्। अद्यत इति सतः, अद् भक्षणे। यद्वा अन्यते प्राण्यते एतेनेति अन्नम्, अन प्राणने। तत् साम्राज्यानां राष्ट्राणामधिपतिः। अन्नेनैव साम्राज्यानि धार्यन्ते। यथोक्तं ब्राह्मणे—"अन्नं प्राणमन्नमपानमाहुः अन्नं मृत्युं तमु जीवातुमाहुः। अन्नं ब्रह्मणो जरसं वदन्ति अन्नमाहुः प्रजननं जनानाम्", (तै० 2.8.8.3) ॥ 11 ॥

सोम ओषधीनामधिपतिः। सोमः चन्द्रो भवति सुवति जलमिति। स ओषधीनां लतागुल्मादीनामधिपतिः पालकः।[28], चन्द्रज्योत्स्नया ह्योषधयो वर्धन्ते। यद्वा सोमः सोमाख्य ओषधिः, सूयन्ते रसाः यस्मात् सः। स चौषधीनामधिपतिः ओषधीषु मुख्यतमो विद्यते। सोमरसो हि बहुलशक्तिवर्द्धक इति प्रसिद्धम्। यथोक्तं वेदे—"हन्ताऽहं पृथिवीमिमां निदधानीह वेह वा। कुवित्सोमस्यापामिति।" (ऋ० 10.119.1-13) ॥ 12 ॥

सविता प्रसवानामधिपतिः। सविता जन्मदाता प्रेरको वा परमेश्वरः। सुनोति सुवति वा सर्वं जगत् यः सः। स प्रसवानां जन्मनां प्रकृष्टप्रेरणानां वा अधिपतिः। सूर्योऽपि सविता भवति सुनोत्युत्पादनहेतुर्भवति। सोऽपि प्रसवानाम् उत्पत्तीनां मेघानां वा अधिपतिः। राजाऽपि सविता प्रोच्यते, ऐश्वर्याणि सुवतीति। राजा प्रसवानां राज्यानामधिपतिः स्वामी वर्त्तते। "प्रसवः प्रकृष्टतया सुवन्ति प्रेरयन्ति वीरा यस्मिन् तद्राज्यम्" इति दयानन्दः, (ऋ० भा० 1.102.9) ॥ 13 ॥

रुद्रः पशूनामधिपतिः। रुद्रः परमेश्वरः, यो रुतं दुःखं रोगं वा द्रावयति, दुष्टान् रोदयति वा। स पशूनां प्राणिनाम् अधिपतिः। 'तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा अजावयः", अ० 11.2.9, इति श्रुतिः। "रुद्रः पशूनामीष्टे" इति ह ब्राह्मणम्, (श० 1.7.3.1)। राजाऽपि रुद्र इत्युच्यते रोदयति दुष्टान् शत्रूनिति। सोऽपि पशूनाम् अधिपतिः पालको भवति ॥ 14 ॥

त्वष्टा रूपाणामधिपतिः। अग्निः सूर्यश्च त्वष्टेत्युच्यते, त्विषितः प्रदीप्तो भवति। "य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।

28- "सोम ओषधीनामधिराजः" इति ह ब्राह्मणम्, तै० 3.9.17.1

तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान्', ऋ० 10.110.9, इति श्रुतिः। "अग्निरिति शाकपूणिः", (निरु० 8.14)। स रूपाणां शुक्लादिवर्णानामधिपतिः स्वामी तेषां जनकत्वात्। "त्वष्टा हि रूपाणि विकरोति", इति ह ब्राह्मणम्, (तै० 2.7.2 1) ॥ 15 ॥

विष्णुः पर्वतानामधिपतिः। विष्णुर्व्यापकः परमेश्वरः, वेवेष्टिः व्याप्नोति चराचरं जगत् यः सः। स पर्वतानां शैलानां मेघानां वाऽधिपतिः तेषां जनकत्वात्। "पर्वत इति मेघनाम", (निघ० 1.10)। अथवा विष्णुः सूर्यो भवति स्वदीप्त्या वेवेष्टि व्याप्नोतीदं सर्वम्। स च पर्वतानां मेघानामधिपतिस्तन्निमित्तत्वात्। सूर्येण मेघाः जन्यन्ते ॥16॥

मरुतः गणानामधिपतयः। वायवो मरुतः उच्यन्ते। निरुक्ते मध्यस्थानीयदेवेषु मरुतः पठिताः। "अथातो मध्यस्थाना देवगणाः। तेषां मरुतः प्रथमगामिनो भवन्ति। मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा" इति निरुक्तम्, (11.13)। एते गणानां गणेषु गच्छताम् अधिपतयः सन्ति। वायवो हि स्वयं गणगामिनः सन्तः, इतरेषामपि गणगामिनां दृष्टान्तभूता भवन्ति। ऋत्विजोऽपि मरुतो भवन्ति। "मरुतः इति ऋत्विङ्नाम", निघं० (3.18)। ते हि गणानां यजमानगणानाम् अधिपतयः तत्कार्यसञ्चालकत्वात्। प्राणा वा मरुतः इत्युच्यन्ते। प्राणा हि गणानामिन्द्रियसमूहानामधिपतयो वर्त्तन्ते॥ 17 ॥

पितरः पितामहाः परेऽवरे ततास्ततामहाः। पितरः जनकाः पान्तीति सतः। पितामहाः ये पितॄणां पितरस्ते। परेऽवरे, परे प्राचीनाः, अवरेऽर्वाचीनाः। ताः विततः वंशविस्तारे दूरं यावद् गताः प्रपितामहा इत्यर्थः, ततामहा ततोऽपि दूरतरं गताः प्रप्रपितामहादयः॥ 18 ॥

अथ स मामवत्वित्यादि व्याख्यायते प्रतिमन्त्रसम्बन्धम्। सोऽग्न्यादिः माम् अवतु रक्षतु। अस्मिन् ब्रह्मणि ब्रह्मवर्चःप्राप्तये, अस्मिन् क्षत्रे क्षात्रबलप्राप्तये, अस्यामाशिषि महत्त्वाकाङ्क्षायाम्, "आशिषः चक्रवर्त्तिराज्यानुशासनादयः इच्छाः" इति दयानन्दः, ऋ० भा० भू०, पृ० 149, "आशीराशास्तेः" इति यास्कः, निरु० 6.8, अस्यां पुरोधायाम् अग्रणीत्वक्रियायाम्, पुरोऽग्रे धीयत इति पुरोधाः, अस्मिन् कर्मणि विवाहयज्ञकर्मणि, अस्यां देवहूत्यां देवताह्वाने संग्रामे वा। स्वाहा अनया भावनयेदमाज्यं सुहुतमस्तु। इदमाज्यमग्न्यादिदेवेभ्यो हूयते न मदर्थमिति भावः॥

अभिप्रायः—आभिरभ्यातानाहुतिभिः कन्यया पुरुषेण च हृदयस्थ-सङ्कोचभावमपाकृत्य स्वस्मिन् विस्तृतगुणा धार्यन्ते। "अय निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यौदार्यभावं हृदि निधातुमेषु मन्त्रेषूपदिष्टम्। गृहस्थजीवने ब्रह्मशक्तेः क्षात्रशक्तेश्चावश्यकतामनुभूय तत्प्राप्त्यै अग्न्यादिदेवाः प्रार्थ्यन्ते। आशिषां विभिन्नमहत्त्वाकाङ्क्षाणां सिद्धये चाप्येते देवाः स्मर्यन्ते। सामाजिकजीवने पुरोधा अग्रणीत्वभावनापि मनसि भवेदित्यपि सूच्यते। यज्ञकर्मणि, जीवनसंग्रामे चोन्नतये उपर्युक्तदेवगणानां गुणा आत्मनि संग्राह्याः। यथा खल्वीश्वरादयस्तत्तद्गुणैस्तत्तदग्न्यादिसंज्ञया आहूयन्ते तथैव गृहस्थेनाऽपि अग्निः, इन्द्रः, यमः, वायुः, सूर्यः, चन्द्रमाः, बृहस्पतिः, मित्रः, वरुणः, समुद्रः, अन्नम्, सोमः, सविता, रुद्रः, त्वष्टा, विष्णुः मरुतः, पितरः, पितामहाः, परे, अवरे, तताः, ततामहाः एतेषां गुणा धारणीयाः। सूर्यो यथा तापेन लोकान् पोषयति चन्द्रश्च शीतलज्योत्स्नया तथैव गृहस्थजीवनेऽपि शीतलत्वोष्णत्वे आवश्यके। गृहपतिना बृहस्पतिवत् विदितवेदितव्येन, मित्रवत् सत्यकर्तृणा, वरुणवदपां रक्षकेण, समुद्रवद् गभीरेण च भवितव्यम्। अन्नं यथा सर्वान् प्राणिनः प्राणयति धारयति च तथैव साम्राज्यस्य धारकोऽपि स भवेत्। गृहस्थः सोमवत् सौकुमार्यादिगुणान् धारयेत् ओषधिवच्च रोगापहर्त्ता भवेत्। सवितृवदैश्वर्योत्पादकत्वं रुद्रवद्दुष्टजननाशकत्वञ्चापि जीवनसंग्रामे आवश्यकम्। त्वष्टैव यथा रूपस्य सत्ता तथैव पतिरूपत्वष्ट्रा वधूरूपमुज्ज्वलं भवतीत्यपि गृहस्थजीवने ध्येयम्। विष्णुवद् यशसा लोकं व्याप्नुयात्। पर्वतवत् सुखवर्षको मरुद्वत् क्रियाशीलश्च भवेत्। पितापितामहादिभ्यो बान्धवजनेभ्यश्च सुचरितानि संगृह्य जीवनपथेऽग्रेसरो भवेत्। इत्थं विश्वेभ्यो देवेभ्यो विविधगुणान् ग्रहीतुं तत्तद्देवस्मरणपूर्वकमभ्यातानाहुतयो हूयन्ते।

ङ- अष्टाज्याहुतयः

ततोऽष्टभिर्मन्त्रैरष्टाज्याहुतयो[29] दीयन्ते।

---

29- पा० गृ० सूत्रे, 1.5.11-12, आद्याः पञ्चमन्त्रा एव पठिताः; गो० गृ० सूत्रे, 2.1.24; खा० गृ० सूत्रे, 1.3.11, च षडाज्याहुतयो वर्णिताः। तु०—मं० ब्रा० 1.1.10-15; अन्येष्वपि गृह्यसूत्रेषु मन्त्राणामाहुतीनां च संख्या न्यूनाधिका दृश्यते। मन्त्रा अपि क्वचिदंशतो भिन्नाः।

ओम् अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघन्न रोदात् स्वाहा ॥
इदमग्नये-इदन्न मम ॥ 1 ॥

मन्त्रार्थः—देवतानां दिव्यगुणयुक्तानां प्रथमः श्रेष्ठः अग्निः यज्ञाग्निः ऐतु आ समन्तात् एतु प्राप्नोतु । स च अस्यै अस्याः, षष्ठ्यर्थे चतुर्थी, प्रजां पुत्रादीन् मृत्युपाशात् मरणदुःखात् मुञ्चतु त्यजतु मोचयतु । अयं प्रत्यक्षवदनुभूयमानः राजा वरुणः राजमानः परमेश्वरः तत् प्रजामोचनम् अनुमन्यताम् अनुजानातु । यथा येन इयं स्त्री पौत्रं पुत्रसम्बन्धिनम् अघं दुःखं न रोदात् न रुद्यात् । अकालमृत्युना कदाचिदपत्यवियोगोऽस्याः मा भूदित्यर्थः । स्वाहा तदर्थम् आहुतिं दद्मः ।

ओम् इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियं स्वाहा ॥
इदमग्नये-इदन्न मम ॥ 3 ॥

मन्त्रार्थः—गार्हपत्योऽग्निरिमां वधूं त्रायताम् अग्निरिमां पत्नीमग्निहोत्रिणीं कृत्वा रक्षत्वित्यर्थः । अस्यै प्रजां सन्ततिं दीर्घमायुश्च नयतु प्रापयतु । इयं कन्या अशून्योपस्था अशून्यक्रोडा भवन्ती जीवतां दीर्घायुषां पुत्राणां माता जननी अस्तु जीवपुत्रा सा भवित्वत्यर्थः । इयं स्त्री पौत्रं पुत्रसम्बन्धिनम् आनन्दं सुखसन्दोहम् अभिविबुध्यताम् आभिमुख्येन सर्वतो वा विशेषेण जानातु । तदर्थं स्वाहा सुहुतमस्तु ।

ओं स्वस्ति नोऽग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र ।
यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रं स्वाहा ॥
इदमग्नये-इदन्न मम ॥ 3 ॥

मन्त्रार्थः—हे यजत्र यजनीय अग्ने, परमात्मन् यज्ञाग्ने वा, दिव आ द्युलोकमभिव्याप्य आ पृथिव्याः पृथिवीलोकमभिव्याप्य च नः अस्माकं यानि विश्वानि सर्वाणि अयथा अन्यथा अन्यथाकृतानि कर्माणि सन्ति तानि स्वस्ति यथा स्यात् तथा सुष्ठु अनुकूलानि वा धेहि कुरु । अस्यां पृथिव्यां दिवि द्युलोके च यद् महि महत्त्वपूर्णं प्रशस्तम् उत्तमम् चित्रं चायनीयं स्पृहणीयं द्रविणं धनादिकं जातम् उत्पन्नं विद्यते तदस्मासु धेहि अस्मान् प्रापय । तव प्रेरणया वयमनुचितानि कर्माणि नैव कुर्याम, शुभकर्मणा च तत्फलं द्रविणं सर्वविधमैश्वर्यंजातं प्राप्नुयामेत्यर्थः ।

ओं सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः ।
अपैतु मृत्युरमृतं म आगाद् वैवस्वतो नो अभयं कृणोतु स्वाहा ।।
इदं वैवस्वताय-इदन्न मम ।। 4 ।।

**मन्त्रार्थः**—हे अग्ने परमात्मन् यज्ञाग्ने वा नः अस्मान् सुगं सुखेन गम्यं पन्थां पन्थानं, प्रदिशन् उपदिशन् प्रकाशयन्नित्यर्थः नु निश्चयेन एहि प्राप्तो भव । ज्योतिष्मध्ये ज्योतिष्मति गृहस्थजीवने, नः अस्माकम् आयुः वयः अजरत् जरादिपराभवरहितम् भवतु । मृत्युः अकालमरणम् अस्मत्सकाशात् अपैतु अपगच्छतु, अमृतं स्वास्थ्यदीर्घायुष्ट्वजन्यम् आनन्दञ्च मे मह्यम् आगात् प्राप्नोतु । वैवस्वतः आत्मा सूर्यो यमो वा नः अस्माकम् अभयं भयराहित्यं कृणोतु करोतु ।

ओं परं मृत्यो अनु परेहि पन्थां यत्र नो अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान्त्स्वाहा ।।
इदं मृत्यवे-इदन्न मम ।। 5 ।।

**मन्त्रार्थः**—हे मृत्यो, यत्र येषु कदाचारमार्गानुयायिषु नः अस्माकं देवयानात् इतरः देवाः नियमपरायणा जना येन गच्छन्ति स देवयानः तद्भिन्नः पन्थाः जीवनमार्गः अस्ति तं परं पन्थां मार्गम् अनु परेहि अनुधाव । ये स्वास्थ्यमार्गं सदाचारमार्गं च नानुसरन्ति तानेव पीडयेत्यर्थः । चक्षुष्मते चक्षुः-सम्पन्नाय शृण्वते श्रोत्रसम्पन्नाय इव ते तुभ्यं, यथा कश्चित् चक्षुष्मन्तं श्रोत्रवन्तं वा ब्रूते तथेत्यर्थः, अहं ब्रवीमि कथयामि । किम् ? नः अस्माकं प्रजां सन्ततिं मा नैव उत तथा चास्माकं वीरान् वीरपुरुषानपि मा नैव रीरिषः विनाशय ।

ओं द्यौस्ते पृष्ठं रक्षतु वायुरूरू अश्विनौ च ।
स्तनन्धयस्ते पुत्रान्त्सविताभिरक्षत्वावाससः परिधानाद्
बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् स्वाहा ।।
इदं विश्वेभ्यो देवेभ्यः-इदन्न मम ।। 6 ।।

**मन्त्रार्थः**—द्यौः द्युलोकः द्युलोकस्थसूर्यो वा, ते तव वध्वा वरस्य वा पृष्ठं पृष्ठमित्युपरिष्ठानामङ्गानामुपलक्षणम्, तानि रक्षतु । वायुः पवनः, अश्विनौ प्राणापानौ च ते ऊरू ऊर्वित्यधस्तानामङ्गानामुपलक्षणम्, तानि रक्षतु आमयाद्यभावेन पालयतु । ते तव स्तनन्धयःपुत्रान् स्तनौ धयन्त इति स्तनन्धयाः तान्, विभक्तिवचनव्यत्ययः, शिशून् वाससः वस्त्राणाम् आ परिधानाद् धारणात् प्राक्, सविता उत्पादकः

पिता, तत्र मातुरपि ग्रहणम्, अभिरक्षतु सर्वतः पालयतु। पश्चात् वस्त्रपरिधानयोग्ये जाते सति बालकं बृहस्पतिः आचार्यः विश्वेदेवाः अन्ये च विद्वांसोऽध्यापकाः "विद्वांसो हि देवाः", श० 3.7.3.10, अभिरक्षन्तु ज्ञानदानादिना सर्वतो वर्धयन्तु।

ओं मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः
संविशन्तु मा त्वं रुदत्युर आवधिष्ठा जीवपत्नी
पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा ॥
इदमग्नये-इदन्न मम ॥ 7 ॥

**मन्त्रार्थः**—ते तव युष्माकमित्यर्थः, गृहेषु वसतिषु, निशि रात्रौ, घोषः आर्त्तनादः कलहो वा मा उत्थात् नैव श्रूयेत, युवयोर्दाम्पत्यजीवनं प्रेमपूर्णं भवेदित्यर्थः। हे वर, त्वत् तवान्तिकात् स्त्रियः रुदत्यः विलपन्त्यः अन्यत्र भिन्नस्थानं मा संविशन्तु मा गच्छन्तु, तवकारणात् स्त्रियः रोदनं कृत्वा शरणान्वेषणाय अन्यत्र नैव यान्तु, त्वं न कामपि स्त्रियं सन्तापयेत्यर्थः। हे वधु, त्वमपि रुदती विलपन्ती उरः वक्षःस्थलं मा आवधिष्ठाः नैव प्रताडय। जीवपत्नी जीवः पतिर्यस्याः सा जीवपत्नी तादृशी त्वं, सुमनस्यमानां सप्रसन्नचित्तां प्रजां सन्ततिम् पश्यन्ती अवलोकयन्ती पतिलोके पत्युर्गृहे विराज सुशोभिता भव।

ओम् अप्रजस्यं पौत्रमर्त्यंपाप्मानमुत वा अघम्।
शीर्ष्णःस्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशं स्वाहा ॥
इदमग्नये-इदन्न मम ॥ 8 ॥

**मन्त्रार्थः**—अहम् अप्रजस्यं पुत्रशून्यत्वदोषं, यस्माद् दोषादपत्यं नैवोत्पद्यते तम्, पौत्रमर्त्यंपाप्मानं पुत्रमरणदोषं, यस्माद् दोषात् पुत्रा उत्पद्य म्रियन्ते तम्, उत वा अथवा अघम् अन्यविधं कंचिद् दोषं, पाशं पाशभूतं सन्ततिप्रतिबन्धकम् शीर्ष्णस्रजमिव शीर्ष्णः शिरसः स्रजं हारमिव उन्मुच्य प्रतिच्याव्य द्विषद्भ्यः दुष्टशत्रुभ्यः प्रतिमुञ्चामि त्यजामि, त एव दोषैरेतैर्बाध्येरन् येन तेषां सन्ततिवृद्धिर्न जायेत।

**अभिप्रायः**—एष्वष्टाज्याहुतिमन्त्रेषु पुरोहितेन कार्यकर्त्रादिभिश्च वरवध्वोर्मङ्गलायाशीर्वचांसि उच्चार्यन्ते। वरवधूभ्यामपि उपर्युक्तमन्त्रभावान् हृदि निधाय तादृशाचरणाय संकल्प्यते। दाम्पत्यजीवने पुत्रोत्पत्तिरपेक्ष्यते। अतः एते मन्त्राः पुत्रस्य श्रेष्ठत्वं प्रतिपादयन्ति दीर्घजीविनां पुत्राणां प्रार्थनाप्येषु मन्त्रेषु विहिता। यथोक्तमन्यत्र—

"क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे", ऋ० 10.85.42, इति। प्रशस्त-द्रविणादिधनैश्वर्याणामपि संचयो गृहस्थेन विधेयः। धनाभावेन, मृत्युना, कलहादिना वा गृहेषु नाऽऽर्त्तनादो भवेदेतदर्थं गृहस्थेन पूर्ण-परिश्रमिणा, संयमिना, शान्तस्वभावेन च भवितव्यम्। वस्त्रपरिधान-पर्यन्तं बालकं मातापितरौ पालयेताम्, तदनन्तरं गुरुकुले आचार्यः पालयेदिति षष्ठमन्त्रे वर्णितम्। अनेनेदं सूच्यते यद्विवाहानन्तरं गृहस्थस्य न केवलं पुत्रोत्पत्तिरेव लक्ष्यमपितु पुत्रस्य पालनं शिक्षणञ्चाप्यनिवार्यं भवति। तदैव गृहस्थजीवने दीर्घायुष्यं, शान्तिः सुखादयश्च प्रादुर्भवन्ति। गृहस्थजीवने पुत्रः सुखस्य मूलहेतुर्भवति। कुपुत्रेण गृहं दुःखमयं भवति, सुपुत्रेण च गृहे शान्तिर्जन्यते। अतः पुत्रे सुशीलत्वं धार्मिकत्वं विद्वत्त्वं चावश्यकं भवति। केनाप्युचितमेवोक्तम्—"किं तया क्रियते धेन्वा या न सूते न दुग्धदा। कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान्॥ अतः सुपुत्रोत्पत्तये सदाचारमयजीवनं, धनैश्वर्यवृद्ध्यर्थं पूर्णपरिश्रमः, दीर्घायुष्याय च तपःसाधनादिकमनिवार्यं जायते। अष्टाज्याहुतीनामय-मेवाभिप्रायः।

अष्टाज्याहुतीनामनन्तरम् "ओं भूरग्नये स्वाहा" इत्यादिभिश्चतुर्भि-र्मन्त्रैश्चतस्रः आज्याहुतयः (व्याहृत्याहुतयः) दीयन्ते। अत्र भूम्यन्तरिक्ष-द्युस्थानीयेभ्यः अग्निवाय्वादित्येभ्य आहुतयः प्रदीयन्ते। यद्वा एतानि परमात्मनो नामानि। परमात्मानं साक्षीकृत्य अग्नौ हूयते। यथाग्निः जगत् प्रकाशयति, वायुः प्राणयति, आदित्यश्च जीवयति परमात्मापि सर्वानुपकरोति, तथैव वरवधूभ्यामुपकर्त्तव्यमिति भावः।

०:—:०

# पञ्चमोऽध्यायः

## 1- पाणिग्रहणम्

राष्ट्रभृज्जयाऽभ्यातानाज्यहोमे विहिते तदुत्तरं षण्मन्त्रैः पाणिग्रहणविधिः सम्पाद्यते।

**विधिः**—वरः आसनादुत्थाय पूर्वाभिमुखोपविष्टाया वध्वाः सम्मुखे पश्चिमाभिमुखमुपतिष्ठन् स्ववामहस्तेन वध्वा दक्षिणहस्तमुत्तानमुत्थापयति। स्वदक्षिणहस्तेन च उत्थापितवधूदक्षिणहस्ताञ्जलिम् उत्तानमेव साङ्गुष्ठं गृह्णाति। इमान् षड्मन्त्रांश्च[1] पठति—

ओं गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः॥ 1 ॥[2]

**मन्त्रार्थः**—हे वरानने, अहं सौभगत्वाय सौभाग्याय ते तव हस्तं करं गृह्णामि स्वीकरोमि, यथा येन त्वं मया पत्या सह जरदष्टिः सुखपूर्वकं प्राप्तजरावस्था असः भवेः। भगः सकलैश्वर्ययुक्तः अर्यमा न्यायकारी सविता सकलजगदुत्पादकः पुरन्धिः बहुविधजगद्धारकः परमात्मा, देवाः अन्ये च समुपस्थिता विद्वांसः, गार्हपत्याय गृहस्थधर्मपालनाय त्वा त्वां मह्यम् अदुः दत्तवन्तः।

ओं भगस्ते हस्तमग्रभीत् सविता हस्तमग्रभीत्।
पत्नी त्वमसि धर्मणाऽहं गृहपतिस्तव॥ 2 ॥[3]

---

1- तु०—आ० गृ० 1.7.3; गो० गृ० 2.2.16; शां० गृ० 1.13.2; खा० गृ० 1.3.31; पा० गृ० 1.6.3; हि० गृ० 1.20.1; आप० गृ० 2.4.15; आग्नि० गृ० 1.6.2; बौ० गृ० 1.4.10; भा० गृ० 1.15; वा० गृ० 14.13; मा० गृ० 1.10.15; का० गृ० 15.22; वै० गृ० 3.3; जै० गृ० 21.1

2- ऋ० 10.85.36; अ० 14.1.50

3- अ० 14.1.51, इत्यत्र "अग्रभीत्" स्थाने "अग्रहीत्" इति पाठः; आपस्तम्ब मन्त्रपाठे, 2.3.10, शां० गृ० सूत्रे, 2.3.1, च "अग्रभीत्" इत्येव पाठः।

**मन्त्रार्थः**—हे प्रिये, भगः ऐश्वर्ययुक्तो वरः ते तव हस्तम् अग्रभीत् गृह्णाति, सविता धर्ममार्गे प्रेरको वरः, षू प्रेरणे, तव हस्तम् अग्रभीत् गृह्णाति। अहं भगः सविता च भूत्वा तव हस्तं गृह्णामीत्यर्थः। त्वं धर्मणा धर्माचरणपूर्वकं मम मदीया पत्नी भार्या असि वर्त्तसे अहञ्च तव त्वदीयः गृहपतिः गृहपालकः अस्मि।

ओं ममेयमस्तु पोष्या मह्यं त्वादाद् बृहस्पतिः।
मया पत्या प्रजावति शं जीव शरदः शतम्॥ 3 ॥[4]

**मन्त्रार्थः**—इयं पाणिग्रहीता मम मे पोष्या पोषणयोग्या पत्नी अस्तु भवतु। हे अनघे, बृहस्पतिः बृहतां लोकानां पालकः परमात्मा त्वा त्वां मह्यं मदर्थम् अदात् दत्तवान्। प्रजावती सन्तानवती त्वं मया पत्या सह शतम् शरदः वर्षाणि शं जीव सुखेन प्राणिहि।

ओं त्वष्टा वासो व्यदधाच्छुभे कं बृहस्पतेः प्रशिषा कवीनाम्।
तेनेमां नारीं सविता भगश्च सूर्यामिव परिधत्तां प्रजया॥ 4 ॥[5]

**मन्त्रार्थः**—बृहस्पतेः वाचस्पतेः परमेश्वरस्य कवीनाम् आप्तानां विदुषां च प्रशिषा निर्देशेन शिक्षया त्वष्टा वस्त्रशिल्पवित् तन्तुवायः शुभे शोभायै कं सुखेन वासः वस्त्रं व्यदधात् रचितवान्। तेन वाससा सविता प्रेरकः भगः ऐश्वर्यवांश्च पतिः सूर्याम् इव उषसमिव तेजस्विनीम् इमां नारीं वधूं प्रजया सन्तत्या सह परिधत्तां पालयतु। प्रकृतौ सोमः सूर्यां विवहति, तत्र सूर्या यथा तेजोवाससाऽलङ्कृता भवति तथैवेयं वधूरपि भवेदित्याशयः।

ओम् इन्द्राग्नी द्यावापृथिवी मातरिश्वा मित्रावरुणा भगो अश्विनोभा।
बृहस्पतिर्मरुतो ब्रह्म सोम इमां नारीं प्रजया वर्धयन्तु॥ 5 ॥[6]

**मन्त्रार्थः**—हे मम सम्बन्धिजनाः, यथा इन्द्राग्नी विद्युत्पार्थिवाग्नी, द्यावापृथिवी सूर्यलोकभूलोकौ, मातरिश्वा अन्तरिक्षस्थो वायुः, मित्रावरुणा प्राणोदानौ, भगः ऐश्वर्यम्, अश्विना सद्वैद्यसत्योपदेशकौ, उभा उभौ, बृहस्पतिः बृहत्याः प्रजायाः पालको राजा, मरुतः सभ्याः विद्वांसः, ब्रह्म बृहत्तमः परमात्मा, सोमः चन्द्रः सोमलताद्या ओषधयो वा सर्वाः

---

4- अ० 14.1.52, इत्यत्र "शं जीव" स्थाने "सं जीव" इति पाठः।
5- अ० 14.1.53
6- अ० 14.1.54

प्रजाः वर्धयन्ति तथैव इमां नारीं सम्मुखीभूतां मदीयां पत्नीं भवन्तः प्रजया पुत्रादिभिः वर्धयन्तु ।

ओम् अहं विष्यामि मयि रूपमस्या वेददित् पश्यन् मनसः कुलायम् ।
न स्तेयमद्मि मनसोदमुच्ये स्वयं श्रथ्नानो वरुणस्य पाशान् ॥ 6 ।[7]

**मन्त्रार्थः**—यथा अहं मनसा अन्तःकरणेन कुलायं कुलवृद्धिं पश्यन् अवलोकयन् अस्याः सम्मुखे स्थितायाः तव रूपं विष्यामि प्रीत्या व्याप्नोमि तथैव त्वम् अपि हे वधु, मयि प्रेम्णा व्याप्य अनुकूलव्यवहारं वेदत् प्राप्नुहि । यथा चाहं मनसा स्तेयं चौर्यम् उदमुच्ये त्यजामि चौर्येण वस्तूनि च न अद्मि नैव भक्षयामि सेवे वा, स्वयं वरुणस्य उत्कृष्ट-व्यवहारे विघ्नरूपस्य दुष्टपुरुषस्य पाशान् बन्धनानि स्वयं श्रथ्नानः शिथिलयन् वर्त्ते तथैव इत् त्वमपि भव । नावां कदापि परस्परं चौर्यं कुर्याव, प्रेम्णा च परस्परं व्यवहरेव इति भावः ।[8]

**अभिप्रायः**—पाणिग्रहणमन्त्रान् वरः पठति । तथापि मन्त्रेषु पतिद्वारा स्वकीया या भावनाः प्रकाश्यन्ते ता सर्वा वधूरपि स्वहृदये निदधाति । वध्वा हस्तं गृह्णन् वरो यद्यत् प्रतिजानीते तत्तद् वरहस्तं गृह्णाना सापि प्रतिजानीते इत्याह दयानन्दः । अहं गृहस्थधर्मपालनाय तव सौभाग्याय च त्वाम् अर्यमादिगुणयुक्तस्य परमेश्वरस्य कृपया समुपस्थितविदुषां च सम्मत्या गृह्णामि न तु बलात्कारेण । जरापर्यन्तं च तव पालनस्योत्तरदायित्वमहं स्वीकरोमि । ऐश्वर्यस्य सुखमूलत्वाद् भगः ऐश्वर्यशाली सविता धर्ममार्गेषु प्रेरकश्च पतिर्भवेदिति ज्ञाप्यते । ऐश्वर्यवान् पतिः सन्तत्या सह पत्न्या आजीवनं वस्त्रादिसंपूर्त्तिं कुर्या-दिति सूच्यते । "ममेयमस्तु पोष्या" इत्यनेन पत्नी पत्या पोषणीया भवति न तु पतिः पत्न्येत्यप्युदिश्यते । सम्बन्धिजनानामपीदं कर्त्तव्यमस्ति यत्ते नारीं वर्धयन्तु, उन्नतिपथे धर्ममार्गे च प्रेरयन्तु । गृहस्थाश्रमे वधूवरौ परस्परं चौर्यं कदापि न कुर्याताम्, यत्किञ्चिदपि समर्ज्येत तत् संविभज्यैव भुञ्जीयाताम् ।

---

7- अ० 14.1.57

8- चतुर्थमन्त्रं व्यतिरिच्य शेषमन्त्राः संस्कारविधेष्टिप्पण्याम् प्रदत्तं स्वामिनो हिन्दीभाष्यमनुसृत्यास्माभिः संस्कृतभाषया व्याख्याताः ।

## 2- कलशपुरुषसमेतं वरवधूद्वारा यज्ञकुण्डस्य प्रदक्षिणा, प्रतिज्ञा च

पाणिग्रहणान्ते वरो वधूहस्ताञ्जलिं प्रगृह्य तामुत्थापयति। कलशपुरुषसहितञ्चोभौ वरवध्वौ यज्ञकुण्डं परिक्राम्यतः। परिक्रम्य च निम्नमन्त्रेण प्रतिज्ञां कुरुतः -

ओम् अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहम्।
सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं
तावेव विवहावहै सह रेतो दधावहै।
प्रजां प्रजनयावहै पुत्रान् विन्दावहै बहून्।
ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ।
पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम्।[9]

**मन्त्रार्थः**—हे कन्ये, अहम् अमः ज्ञानवान् सत्योपदेशकः गतिशीलः संभजनशीलश्च अस्मि, अम गतिशब्दसंभक्तिषु, सा ज्ञानवती सत्योपदेशिका गतिशीला संभजनशीला च त्वम् असि। यथाहम् अमः त्वां गृह्णामि तथा सा त्वमपि मां गृह्णासि। अहं साम सामवेदोऽस्मि त्वम् ऋक् ऋग्वेदस्य ऋचाऽसि, तद्वदावां प्रशंसितौ स्वः। अहं द्यौः द्युलोकोऽस्मि त्वञ्च पृथिवी भूमिरसि, अहं द्युलोकस्थसूर्यवद् वर्षकोऽस्मि त्वं च पृथिवीवद्गर्भादिधारयित्री वर्त्तसे इति भावः। तावेव त्वमहञ्चावामुभावेव विवहावहै विवाहं कुर्वीवहि। सह संयुक्तौ भूत्वा रेतः वीर्यं दधावहै धारयेव। प्रजां सन्ततिं पुत्रपुत्रीरूपां प्रजनयावहै उत्पादयेव। बहून् द्व्यधिकान् पुत्रान् तनयान् विन्दावहै लभेवहि। ते च पुत्राः जरदष्टयः दीर्घायुषः सन्तु भवन्तु। आवामपि जायापती संप्रियौ परस्परं सम्यक् प्रीतिशालिनौ रोचिष्णू परस्पररुचियुक्तौ सुमनस्यमानौ शोभनविचारौ च भवेव। पुत्रादिसहिता वयं शतं शरदः शतसंवत्सरान् पश्येम रूपग्रहणसमर्था भवेम। शतं शरदः जीवेम प्राणान् धारयेम। शतं शरदश्च शृणुयाम तीव्रश्रवणशक्तियुक्ता भवेम।

**अभिप्रायः**—अमोऽहमितिमन्त्रे वरवधूयुगलं मिलित्वा साम

---

9- अस्य मन्त्रस्य मूलम् अथर्ववेदे, 14.2.71, प्राप्यते। तु०-पा० गृ० 1.6.3; आ० गृ० 1.7.6; शां० गृ० 1.13.5; का० गृ० 14.13; भा० गृ० 1.20; हि० गृ० 1.20.2; मा० गृ० 1.10.15

भवतीति सूचितम्। साम समस्वरतायाः सामञ्जस्यस्य संगीतस्य च द्योतकम्। ऋच्यध्यूढं साम गीयत इति प्रसिद्धम्। एवमेव ऋग्रूपायां वध्वां पुरुषेऽधिरूढे सत्येव गृहस्थयज्ञः प्रवर्त्तते। सामशब्दश्च 'सा+अम" इत्यनयोर्योगेन सम्पद्यते। तत्र वधूः "सा" पुरुषश्च "अमः"। "सा" तु ऋग्रूपा मृदुला, मधुरा, संगीतमयी नारी, अमश्च बलज्ञानप्राणादि-सम्पन्नः पुरुषः। एवं तयोर्योगेन गृहस्थाश्रमः सामसंज्ञको भवति। तदनन्तरं भूयोऽपि स्पष्टीक्रियते "साम अहमस्मि ऋक् त्वम्" इति। पुरुषः साम, वधूश्च ऋगिति।

"द्यौरहं पृथिवी त्वम्" इत्यनेन पतिर्द्युलोकस्थसूर्यवद् सेचनसमर्थो वधूश्च पृथिवीवद्गर्भधारणसमर्था भवेदित्युपदिश्यते, येन तौ प्रकृष्ट-प्रजाजनने समर्थौ स्याताम्। किंच वरस्य द्युलोकवत् तेजोज्ञानादिमत्त्वं, वध्वाश्च पृथिवीवत् धृतिक्षमादिगुणवत्त्वं चापि सूच्यते। अत्र "बहून् पुत्रान् विन्दावहै" इत्युक्तम्। तेन नायमभिप्रायो यत् सन्ताना अनिवार्य-त्वेन बहव एव स्युः, तेऽपि च पुत्रा एव भवेयुर्न पुत्र्य इति। सन्तानानां न्यूनत्वं बहुत्वं वा समाजस्य राष्ट्रस्य चावश्यकानुसारं स्पृहणीयं भवति। पुत्रेषु च पुत्र्योऽपि संमिलिताः "पुत्राश्च पुत्र्यश्च इति पुत्राः" इत्येकशेषः। सन्तानाश्च जरदष्टयः दीर्घायुषः सन्त्विति प्रार्थितम्। नैवं भवेद् यद् बहुसंख्यकाः पुत्रा भवन्तु, परं ते कृशा रोगार्ता अल्पायुषश्च सन्तु। तदपेक्षया तु एको दृढाङ्गः स्वस्थः शताधिकायुष्क एव वरम्। गार्हस्थ्यजीवने मन्त्रस्यान्तिमांशेन वधूवरौ परस्परं प्रीतिमन्तौ अन्यो-न्यस्याकाङ्क्षिणौ तेजस्विनौ सर्वदाशोभमानविचारौ च भवेताम् येन सुखसागरतरङ्गतरङ्गितौ तौ शताधिकवर्षाणि सकलेन्द्रियशक्तियुतौ जीवेतामिति ज्ञाप्यते।

एष प्रतिज्ञामन्त्रः। अस्मिन् मन्त्रे या भावनाः प्रतिपादितास्तासां ग्रहणस्य व्रतधारणं वरवधूभ्यां कर्त्तव्यम्। स्वामिदयानन्देन विवाह-प्रतिज्ञाविषये वेदभाष्येऽपि बहु लिखितम्। यथा—"विवाहप्रतिज्ञास्वियमपि प्रतिज्ञा कारयितव्या। हे स्त्रीपुरुषौ, युवां यथा स्वहितायाचरतं तथास्माकं माता-पित्राचार्यातिथीनां सुखायापि सततं वर्त्तेयाथाम्।", यजु० 15.55, "विवाहे स्त्रीपुरुषाभ्यामियमपि द्वितीया प्रतिज्ञा कारयितव्या येन ब्रह्मचर्येण यया विद्यया च युवां स्त्रीपुरुषौ कृतकृत्यौ भवथस्तत् तां च सदैव प्रचारयतम्। पुरुषार्थेन धनादिकं च वर्धयित्वैतत् सन्मार्गे वीतम्।।" यजु० 15.56, इति।

# 3· शिलारोहणम्

अग्निपरिक्रमानन्तरं शिलारोहणविधिः क्रियते। वरो वधूपृष्ठतस्तस्या दक्षिणभागे निकटं गत्वा, उत्तराभिमुखमुपस्थाय, वध्वा दक्षिणाञ्जलिं स्वदक्षिणाञ्जलिना गृह्णाति, उभौ वधूवरौ च तथैव तिष्ठतः। कलशपुरुषश्च यज्ञकुण्डस्य दक्षिणभागे कलशसहितः पूर्ववदुपविशति। अनन्तरं वध्वा माता भ्राता वा लाजाशूर्पं वामहस्ते गृहीत्वा दक्षिणहस्तेन वध्वा दक्षिणं पादमुत्थाप्य शिलामारोहयति। वरश्च तदानीमिमं मन्त्रं पठति—

ओम् आरोहेममश्मानमश्मेव त्वं स्थिरा भव।
अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥[10]

**मन्त्रार्थः**—हे देवि, त्वम् इमं सम्मुखे स्थितम् अश्मानं प्रस्तरम् आरोह उपतिष्ठ। अश्मेव प्रस्तरमिव त्वं स्थिरा गृहस्थाश्रमे पातिव्रत्यादिधर्मेषु अचला भव, संकटसमयेऽपि च धैर्यं मा त्याक्षीः। पृतन्यतः शत्रून् अभितिष्ठ सर्वतो रन्धय। पृतनायतः संग्राममिच्छतः परिपन्थिनश्च अवबाधस्व पद्भ्यां विलोड्य, तान् न्यक्कृत्य भग्नोद्यमान् कुर्वित्यर्थः।

**अभिप्रायः**—अश्मारोहणविधिना वध्वै विशिष्टसंदेशः प्रदीयते। वैदिकदृष्ट्या नारी दुर्बला नास्ति। यथोक्तम् ऋग्वेदे—"अवीरामिव मामयं शरारुरभिमन्यते। उताहमस्मि वीरिणी, ऋ० 10.86.8, इति। सैव भावना वध्वा हृदि शिलारोहणविधिना बद्धमूला क्रियते। तस्या माता वा भ्राता वा तदभावे कश्चिन्निकटः कन्यापक्षीयो वा वध्वाः पादं शिलोपरि विन्यस्यति, पतिश्चोक्तं मन्त्रं पठति। तेन सूच्यते यत् कन्यापक्षस्य वरपक्षस्य चोभयोरेवायमुपदेशो वधूं प्रति भवति। अश्मा खल्वत्र दार्ढ्यस्य प्रतीकम्। निर्दयानां पाषाणहृदयानां शत्रूणां दमनाय स्वगौरवप्रतिष्ठायै च वधूः पुरुषानेव नाश्रयेद्, अपितु स्वयमप्यस्मिन्

---

10- पा० गृ० 1.7 1; तु-शां० गृ० 1.13.10; आ० गृ० 1.7.7; गो० गृ० 2.2.4; खा० गृ० 1.3.19; हि० गृ० 1.19.8; आप० गृ० 2.5.2;6; मा० गृ० 1.10.16; भा० गृ० 1.16; बौ० गृ० 1.4.24; आग्नि० गृ० 1.6.2; वै० गृ० 3.3; का० गृ० 25.28; वा० गृ० 14.31; जै० गृ० 21 6; मं० ब्रा० 2.1.1; कौशिक 54.8

कर्मणि प्रयतेत। यथा प्रस्तरः सुदृढो भवति तथैव वधूरपि गार्हस्थ्य-जीवने शारीरिकं मानसिकम् आत्मिकञ्च दाढ्यं गृह्णीयादित्युपदिश्यते।

गृह्यसूत्राणामनुसारं यज्ञकुण्डस्योत्तरदिशि शिलास्थापनं[11] खलूत्तरदिक्स्थस्य पर्वतराजस्य हिमालयस्य प्रतीकम्। अनेन हिमालयवद् दुर्गममपि संकटमपाकृत्य गृहस्थजीवने वधूरग्रेसरी भवेदिति प्रोत्साह्यते। दक्षिणेन पदा शिलारोहणं दक्षिणपादस्य वामापेक्षयाऽधिकसामर्थ्यवत्त्वात् शत्रुपराभवस्य प्राबल्यं सूच्यते।

तुलना—गृह्यसूत्रेषु शिलारोहणविधेर्भिन्नताऽपि प्राप्यते। पारस्करगृह्यसूत्रं[12] यज्ञकुण्डस्योत्तरभागे शिलास्थापनां वर्णयति। शांखायनगृह्यसूत्रमपि इममेव विधिं स्वीकरोति, परं "एहि सूनः०" इति मन्त्रेण कन्यायाः पादोत्थानं कार्यमिति तत्र प्रतिपादितम्। उक्तं यथा—"अस्मानं चोत्तरत्र उपस्थाप्य। एहि सूनरिति उत्थाप्य। दक्षिणेन प्रपदेनाश्मानमाक्रमय्य"[13], इति। आपस्तम्बगृह्यसूत्रं तावत् त्रिरश्मारोहणविधिं वर्णयति। एकवारं लाजाहोमात् पूर्वं, द्वितीयवारं च लाजाहोमस्य परिक्रमायाश्च पश्चात्, तृतीयवारं पुनर्लाजाहोमपरिक्रमयोरनन्तरम्।[14] काठकगृह्यसूत्रानुसारं प्राग् वरः स्वयमश्मानमारोहति, ततश्च वधूमप्यारोहयति। अत्र मन्त्रस्योत्तरार्धमेवं विद्यते—"प्रमृणीहि दुरस्यून् सहस्व पृतनायतः।" वाराहमानवगृह्यसूत्रयोः पुरोहितद्वारा वरवध्वोरुभयोरश्मारोहणविधिः सम्पाद्यते। अश्मारोहरणविधिरुभाभ्यां वरवधूभ्यां क्रियत इति हेतोस्तत्र वचनविपरिणामोऽपि मन्त्रे विहितः—एतमश्मानमातिष्ठतमश्मेव युवां स्थिरौ भवतम्। कृण्वन्तु विश्वेदेवा आयुर्वां शरदः शतम्" इति। अनयोर्गृह्यसूत्रयोः शिलावरोहणविधिरपि प्राप्यते।[15] अवतरणविधौ पुरोहितः निम्नवाक्येन वरं सम्बोधयति—"यथेन्द्रः सहेन्द्राण्या अवारुहद् गन्धमादनात्, एवं त्वमस्मादश्मनोऽवरोहस्व", इति। गोभिलगृह्यसूत्रेऽपि

11- द्र०-पा० गृ० 1.7.1; शां० गृ० 1.13.10; आप० गृ० 5.2.6

12- पा० गृ० 1.7.1

13- शां० गृ० 1.13.10-12

14- आप० गृ० 2.5.2-9

15- ऋ०-14.32; 1.10.17; वा० गृ० सूत्रे मन्त्राग्रे "समे पादौ प्रपूर्व्यायुष्मती कन्ये पुत्रवती भव" इत्यधिकपाठः।

त्रिरश्मारोहणविधिः प्रतिपादितः ।[16] आश्वलायनगृह्यसूत्रानुसारं शिलारोहणविधिम् आचार्यः कारयेदिति केचित् । तत्तु टीकाकृता गार्ग्यनारायणेन निराकृतम् ।[17] पारस्करगृह्यसूत्रस्य व्याख्याकाराः कर्कजयरामहरिहरगदाधरहरदत्तमिश्रादयो वरेणायं विधिः सम्पादनीय इति मन्यन्ते ।[18] स्वामिदयानन्दकृत-संस्कारविधौ यो विधिः प्रदर्शितः तन्मूलं खलु गोभिलगृह्यसूत्रं वर्त्तते । यथोक्तं तत्र—"पूर्वा माता लाजानादाय भ्राता वा वधूमाक्रामयेदश्मानं दक्षिणेन प्रपदा । पाणिग्राहो जपति० इममश्मानमारोह" इति ।[19]

## 4- लाजाहुतिः

शिलारोहणतः पश्चात् लाजाहोमः क्रियते । एतदर्थं वधूवरौ कुण्डसमीपे उत्तराभिमुखमुपतिष्ठतः । वधूर्वरस्य दक्षिणभागे गत्वा स्वहस्ताञ्जलिं वरहस्ताञ्जलौ स्थापयति । अनन्तरं वामहस्तधारितलाजाशूर्पा वध्वा माता तादृशो भ्राता वा शूर्पं भूमौ निधाय, अन्यस्मै वा दत्त्वा, वरवध्वोः संयुक्ताञ्जलौ प्रथमं घृतं सिञ्चति, तदा वरस्य नीचैर्वध्वाश्चोपरि हस्ताञ्जलिर्भवति, दक्षिणहस्तेन च लाजाशूर्पाद् द्विः[20] लाजा आदाय तयोरञ्जलौ स्थापयति । पश्चाद् अञ्जलिस्थानां लाजानामुपरि घृतं सिञ्चति । ततो वधूर्वरहस्ताञ्जलिसहितं स्वहस्ताञ्जलिमग्रतो नमयित्वा निम्नैस्त्रिभिर्मन्त्रैरेकैकशस्त्रिर्जुहोति[21]---

ओम् अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः
प्रेतो मुञ्चतु मा पतेः स्वाहा ॥ इदमर्यम्णे-इदन्न मम ॥ 1 ॥
ओम् इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे
पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ इदमग्नये-इदन्न मम ॥ 2 ॥

---

16- गो० गृ० 2.2.10
17- आ० गृ० 1.7,7
18- पा० गृ० 1.7.1
19- गो० गृ० 2.2.3-4
20- गो० गृ० सूत्रं, 2.2.5, लाजाः सकृद् गृहीत्वा वध्वञ्जलावावपेदिति वर्णयति ।
21- द्र०—गो० गृ० 2.2.5-9; तु०-पा० गृ० 1.7.4

ओम् इमांल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यतामियं स्वाहा ॥ इदमग्नये-इदन्न मम ॥ 3 ॥[22]

**मन्त्रार्थः**— कन्याः कुमार्यः यम् अर्यमणं न्यायकारिणम् अग्निम् अग्निवत् प्रकाशमानम् अग्रणीभूतं वा देवं दिव्यगुणयुतं परमात्मानम् अयक्षन्त पूजयन्ति. यद्वा यम् अर्यमणं रोगादिरिपुविनाशकम् "अर्यमा··· अरीन्नियच्छति" इति निरुक्तम्, 11.23, देवं कान्तिमन्तं प्रकाशकं वा अग्निं यज्ञाग्निम् अयक्षन्त यजन्ते, स परमेश्वरो यज्ञाग्निर्वा नः अस्मान् इतः पितृगृहात् प्रमुञ्चतु प्रमोचयतु, मा पतेः पतिसाहचर्यान्मा प्रमुञ्चतु न प्रमोचयतु ॥ 1 ॥

लाजान् प्रफुल्लितधान्यानि आवपन्तिका अग्नौ जुह्वती इयं सम्मुखे स्थिता नारी वधूः उपब्रूते ब्रवीति यन्मे पतिः मम भर्ता आयुष्मान् दीर्घायुः अस्तु भवतु, मम ज्ञातयः बान्धवाश्च एधन्तां धनाद्यैश्वर्येण वर्धेरन् ॥ 2 ॥

हे पते, अहं तव ते समृद्धिकरणं समृद्धिहेतुम् इमान् लाजान् प्रफुल्लितधान्यानि अग्नौ यज्ञाग्नौ आवपामि जुहोमि । मम मे संवननं प्रेम अनुरागः तुभ्यम् त्वदर्थम् अस्तु भवतु, तत् संवननम् अयम् अग्निः परमेश्वरः यज्ञाग्निश्च अनुमन्यताम् समर्थयतु ॥ 3 ॥

**अभिप्रायः**— विवाहे लाजाहोमविधिर्मुख्यतामावहति । भूर्जितानि धान्यानि "लाजाः" इत्युच्यन्ते । यथा अग्निसेकेन धान्यानि प्रस्फुट्य प्रफुल्लानि जायन्ते तथैव वधूवरावपि गृह्याग्निसम्बद्धौ लाजा इव प्रफुल्लौ स्याताम् । अपरञ्च धान्यं यथा क्षेत्रे पूर्वमुत्पद्यते पश्चादारोप्यते च, तथैवेयं कन्याऽपि पूर्वं पितृगृहे जन्यते, पश्चात् पतिगृहे आरोपिता सती धान्यवत् फलतीति भावः । एतदेव वध्वा मात्रा भ्रात्रा वा स्वदक्षिणेन हस्तेन लाजाशूर्पात् लाजान् द्विर्गृहीत्वा वरवध्वोः

22- पा० गृ० 1.6.2 "इदमग्नये इदन्न मम" इत्यंशपाठरहितः, तु०—आ० गृ० 1.7.13; मा० गृ० 1.11.12-13; वा० गृ० 14.18; का० गृ० 25. 23, 30, 35; गो० गृ० 2.2.6-7; खा० गृ० 1.3.22.23; बौ० गृ० 1.4.18, 26; आप० गृ० 2.5.6,8; मं० ब्रा० 1.2.2-4; जै० गृ० 21. 20; शां० गृ० 1.14.1; हि० गृ० 1.20.3-4; भा० गृ० 1.16; आग्नि० गृ० 1.5.4; 1.6.2; वै० गृ० 3.3

संयुक्ताञ्जलौ स्थापनविधिना, "प्रेतो मुञ्चतु मा पतेः" इति मन्त्रांशेन च ज्ञाप्यते। किंच, इयं कन्या लाजावत् सुकोमला पवित्रा शुभ्रमनस्का गुणवती च विद्यते, लाजारूपिणीयं कन्या वरेण ध्यानेन संरक्षणीयेति ध्वन्यते।

वध्वा माता भ्राता वा वरवध्वोः संयुक्ताञ्जलौ लाजास्थापनात् प्राक् तदन्ते च घृतमपि सिञ्चति।[23] अनेन विधिना यथा लाजानां कारणं धान्यं मूले जलादानेन उपरितो वृष्टिजलेन च निरन्तरं वर्धते फलति च तथैवेयं कन्याऽपि आज्येन सर्वतः संवर्धनीयेति सूच्यते। किंच, अग्नौ प्रदीयमाना लाजाहुतिन शुष्का, किन्तु घृतेन स्निग्धा भवेदिति कृत्वाप्यञ्जलौ घृतसेचनम्।

लाजाहोमविधौ संयुक्ताञ्जलिसमये वरस्य हस्ताञ्जलिर्नीचैर्वध्वा-श्चोपरि स्यादिति प्रतिपादितम्। तथाभूते संयुक्ताञ्जलौ वध्वा माता वा भ्राता वा लाजान् आवपति। अनेन विधिना यदा यदा वधूः पितृ-गृहमायास्यति तदा तदा तस्या हस्ते यथेष्टधनादिद्रव्यं प्रदास्यते, तस्मिन् द्रव्ये च पत्युरप्यधिकारो भवतीति सूच्यते। द्रव्यञ्च तत्सामा-जिकोन्नतये व्यक्तिगतशुभकर्मसु च व्ययिष्यत इति लाजाञ्जलेराहुत्या ज्ञाप्यते। यथा चाऽग्निना भूर्जितपूर्वास्ता लाजा आहुतिमाध्यमेन पूर्णतया प्रज्वल्य सुगन्ध्यादिगुणेनोपकुर्वन्ति तथैव कृततपोभ्यां वरवधू-भ्यामपि समाजस्योन्नतये निजसर्वस्वं समर्पितव्यमित्युपदिश्यते।

अग्नौ लाजानावपन्ती वधूः कां भावनां स्वमनसि दधातीति मन्त्रार्थैर्द्योतितं भवति। अहमद्य पितृगृहान्मुच्ये पतिगृहान्न कदापि मुच्येय इति प्रथममन्त्रे वध्वा प्रार्थ्यते। अयमेव भावो यजुर्वेदे प्रोक्तः— "त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः", यजु० 3.60 इति। अञ्जलिस्थानां लाजानामग्नौ मोचनं पितृलोकात् कन्याया मुक्तिसूचकमित्याशयः। द्वितीयतृतीयमन्त्राभ्यां वधूद्वारा पत्युरायुष्मत्तायाः समृद्धेश्च, तथैव ज्ञातीनामपि समृद्धेः समुन्नतेश्च भावो द्योत्यते। यथा सूक्ष्मं धान्यमग्निसम्पर्केण समृद्धं सद् विपुलाकृति भवति तथैव पत्युर्ज्ञातीनां चापि समृद्धिर्भवेदिति तात्पर्यम्। आयुर्वेदे लाजानां गुणा एवं वर्णिताः-- "लाजाः स्युर्मधुराः शीता लघवो दीपनाश्च ते।

---

23- द्र०—शां० गृ० 1.13.16; गो० गृ० 2.2.6; वा० गृ० 15.10; आ० गृ० 2.5.3

स्वल्पमूत्रमला रूक्षा बल्याः पित्तकफच्छिदः। छर्द्यतीसारदाहास्रमेहमेदस्तृषाऽपहाः", भा० नि०, कृतान्नवर्गः श्लो० 175। तेन आयुर्वेददृष्ट्यापि तेषाम् आयुःसमृद्धिकरत्वं भवति।

लाजासु शमीपत्राणां मिश्रणं खलु विशिष्टाभिप्रायेण क्रियते।[24] शुभ्रासु लाजासु हरितानां शमीपत्राणां मिश्रणं शुभ्रवर्णेन पवित्रतायाः हरितवर्णेन च भूमेः सस्यश्यामलतायाः प्रतीकम्। अनेन वध्वा लाजावत् स्वच्छचरित्रयाऽकर्कशया पुत्रप्राप्त्याऽवन्ध्यया च भवितव्यमिति सूच्यते। शमीवृक्षः प्रभूतगुणयुक्तो वर्त्तते, शमयति रोगानिति शमी, शम्याः पर्यायशब्दैस्तस्या गुणबहुत्वं प्रकटं भवति, यथा—तपनतनया, हविर्गन्धा, शुभकरी, मेध्या, दुरितदमनी, शङ्करी इत्याद्याः।[25] शमीगुणविषये भावप्रकाशनिघण्टौ प्रोक्तम्—"शमी तिक्ता कटुः शीता कषाया रेचनी लघु। कम्पकासश्रमश्वासकुष्ठार्शःक्रिमिजित् स्मृता", वटादिवर्गः श्लो० 69, इति।

लाजाहोमविधौ शमीपलाशमिश्रान् लाजान् आवपेदिति केषुचिद्गृह्यसूत्रेषु प्रतिपादितम्।[27] आयुर्वेदिकग्रन्थेषु पलाशस्याऽपि गुणा वर्णिताः, यथा—"पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित्। कषायः कटुकस्तिक्तः स्निग्धो गुदजरोगजित्। भग्नसन्धानकृद्दोषग्रहण्यर्शःक्रमीन् हरेत्", भा० नि०, वटादिवर्गः श्लो० 49। पलाशः याज्ञिकः, समिद्वरः, क्षारश्रेष्ठः इत्यादिभिः पर्यायशब्दैरपि तद्गुणा ज्ञायन्ते,[27] तस्य हव्यता च प्रतिपाद्यते। किञ्च, "पत्रमेकं पलाशस्य पिष्ट्वा दुग्धेन गर्भिणी। पीत्वा पुत्रमवाप्नोति वीर्यवन्तं न संशयः॥"[28] इत्यनेनापि तस्य महत्त्वं प्रकाशते। पलाशपादपे त्रीणि त्रीणि पत्राणि संयुक्तानि भवन्ति, तथा गृहस्थपादपोऽपि त्रिशाखो भवेत्, तिस्रः शाखास्तु पतिः पत्नी सन्ततिश्च।

---

24- द्र०—सं० वि०, पृ० 161 प० 17; गो० गृ० 2.1.15; खा० गृ० 1.3.18; शां० गृ० 1.13.15; वा० गृ० 15.18

25- द्र०—हलायुधवृत्तिः। हिन्दीसमिति, लखनऊ।

26- पा० गृ० 1.6.1; गो० गृ० 2.1.15; खा० गृ० 1.3.18; शां० गृ० 1.13.15

26- भा० नि०, वटादिवर्गः, श्लो० 48

28- भा० नि०, वटादिवर्गे उद्धृतम्

## 5- यज्ञकुण्डस्य प्रदक्षिणाः

लाजाहोमानन्तरं वरेण वधूहस्ताञ्जलिग्रहणपूर्वकं यज्ञकुण्डस्य प्रदक्षिणाः क्रियन्ते। वरो निम्नमन्त्रमुच्चार्य दक्षिणेन स्वहस्तेन वधूहस्तं गृह्णाति—

ओ सरस्वति प्रेदमव सुभगे वाजिनीवति।
यान्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः।
यस्यां भूतं समभवद्यस्यां विश्वमिदं जगत्।
तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः॥[29]

**मन्त्रार्थः**—(प्रकृतिपक्षे)—सुभगे ऐश्वर्यशालिनि, वाजिनीवति क्रियाशीले, सरस्वति सरन्ति न्यूनाधिकभावेन परिणमन्ते इति सरांसि सत्त्वरजस्तमोगुणाः तद्वति हे प्रकृते, इदं दृश्यमानं जगत् प्र प्रकृष्टतया अव रक्ष, आत्मनस्त्रिगुणात्मिकया गत्या चराचरं जगत् सञ्चालयेत्यर्थः, यां प्रसिद्धां त्वा त्वाम् अग्रतः सृष्ट्यादौ अस्य विद्यमानस्य विश्वस्य समस्तस्य भूतस्य पञ्चभूतात्मकस्य जगतः प्र प्रकृष्टां जायां जनयित्रीम् आहुः। यस्यां त्वयि भूतं जातं स्थावरं वृक्षवनस्पत्यादि समभवत् समुत्पन्नं, यस्यां च त्वयि इदं दृश्यमानं विश्वम् अखिलं जगत् जङ्गमं समभवत् समुदपद्यत। या प्रकृतिः स्त्रीणां वधूनाम् उत्तमं यशः श्रेष्ठ-कीर्तित्वेन विद्यते, तां प्रकृतिसम्बन्धिनीं गाथां गुणप्रकाशिकां कथाम् अद्य साम्प्रतम् गास्यामि वर्णयिष्यामि।

(स्त्रीपक्षे)—हे सरस्वति ज्ञानवति, सुभगे कल्याणकारिणि वाजि-नीवति बलवति वधु, इदं सद्य एव उपतिष्ठमानं यज्ञादिकं गृहकर्म प्र प्रकृष्टतया अव रक्ष, गृहकर्मसु गतिशीला भवेत्यर्थः। अस्य विश्वस्य निखिलस्य भूतस्य प्राणिजातस्य अग्रतः प्राक्कालादेव प्र जायां प्रकृष्टां जनयित्रीं त्वा त्वां विद्वांसः मन्यन्ते, समस्तप्राणिसमूहस्य जनने स्त्री-त्वेन त्वं मुख्यतमाऽसीत्यर्थः। यस्यां यस्यास्तव आश्रये भूतम् उत्पन्नम् अपत्यं समभवत् संतिष्ठते, यस्यां यस्याश्च तवाश्रये इदं विश्वं सम्पूर्णं जगत् परिवारः समभवत् भवति। अद्य अहं तां गाथां कथां गास्यामि श्रावयिष्यामि या स्त्रीणां नारीणाम् उत्तमं यशः उत्कृष्टकीर्तिरूपा वर्त्तते। स्त्रियो हि प्रशस्तसन्तानप्रदानेन राष्ट्रधारकत्वात् प्रभूतकीर्तयः सन्तीत्येव तेषां गाथयात्र कीर्त्यंते।

---

29- पा० गृ० 1.7.2

**अभिप्राय:**—यज्ञकुण्डस्य प्रदक्षिणार्थं वधूहस्तं गृह्णन् वर: प्रस्तुत-मन्त्रेण स्त्रियं प्रकृतिरूपिणीं पश्यति। प्रकृत्या च तामुपमित्य तस्या महत्त्वमत्र प्रतिपादयति। यथा प्रकृतिं विना सृष्ट्यभावस्तथैव स्त्रियं विना सन्तत्यभावो भवतीति सृष्टिकारणभूतां स्त्रीशक्तिं स स्पष्टतया स्वीकरोति। प्रस्तुतमन्त्रेण वधू: प्रकृतिवदुत्पादनशक्तियुता भवेदिति सूच्यते।

इत्थं वरो वधूहस्ताञ्जलिं प्रगृह्य, निम्नमन्त्रौ पठित्वा, कलश-पुरुषसहितं यज्ञकुण्डस्य प्रदक्षिणां विदधाति। परिक्रमानन्तरं च पश्चिमभागे पूर्वाभिमुखं वध्वा सह किञ्चित्कालं स्थित्वा पुनस्तथैव प्रदक्षिणाद्वयम् आचरति। एवं तिस्र: प्रदक्षिणा: क्रियन्ते।

ओं तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह।
पुन: पतिभ्यो जायां दा अग्ने प्रजया सह॥ 1 ॥[30]
ओं कन्यला पितृभ्य: पतिलोकं यतीयमप दीक्षामयष्ट॥
कन्या उत त्वया वयं धारा उदन्या इवातिगाहेमहि द्विष:॥ 2 ॥[31]

**मन्त्रार्थ:**—हे अग्ने परमात्मन् यज्ञाग्ने वा, तुभ्यं त्वदर्थं, परमात्मन: पूजार्थं यज्ञाग्नौ च होमार्थमित्यर्थ:, अग्रे पूर्वं मत्पूर्वजा जना: वहतुना सह विवाहपूर्वकं यद्वा कन्यापित्रा स्वेच्छापूर्वकं देयेन द्रव्यराशिना सह सूर्याम् उषसमिव तेजस्विनीम् भार्यां पर्यवहन् पत्नीत्वेन परिगृहीत-वन्त:। पुन: साम्प्रतमपि त्वं प्रजया सन्तानै: सह, अत्र "प्रजया सह" इति भाविसन्तानोपलक्षकम्, जायाम् इमां भार्यां पतिभ्य: पतिरूपाय मह्यं दा: देहि॥ 1 ॥

इयं समुपस्थिता कन्यला कन्या, पितृभ्य: पित्रादिसम्बन्धिजनेभ्य:, पितृगृहादित्यर्थ:, अप दूरे भूत्वा, पतिलोकं पतिगृहं यती गच्छन्ती दीक्षां गार्हस्थ्यव्रतम् अयष्ट अकरोत् करोतीत्यर्थ:, यद्वा इयं वधू: पितृगृहात् पतिगृहं गच्छन्ती दीक्षां ब्रह्मचर्यकालम् अप समाप्य अयष्ट गार्हस्थ्य-यज्ञम् अयष्ट अकरोत् करोतीत्यर्थ:। कन्या अनया कन्यया वध्वेति यावत्, सुपां सुलुगिति पूर्वसवर्णदीर्घ:, उत हे अग्ने परमात्मन् यज्ञाग्ने

30- ऋ० 10.85.38; पा० गृ० 1.7.3; अ० 14.2.1, "पुन:" स्थाने "स न:" इति पाठभेद:।
31- मं० ब्रा० 1.2.5; उत्तरार्धं 'कन्या' इत्यस्य स्थाने 'विश्वा' इति पाठपुरस्स-रम् अग्निदेवताको मन्त्र: ऋग्वेदे पठित:। द्र०-ऋ० 2.7.3

वा, त्वया तव साहाय्येन, वयम्, उदन्या धारा इव वेगवत्यो जलधारा इव, द्विषः शत्रून् गार्हस्थ्यमार्गे बाधकभूतान् मानसान् प्राकृतिकान् मानवान् वा रिपून्, अतिगाहेमहि अतिक्रम्य अभिभवेम ॥ 2 ॥

**अभिप्रायः**—अग्निप्रदक्षिणाविधिना वरो विवाहयज्ञे समुपस्थितेभ्योऽखिलेभ्यो जनेभ्यो मन्त्रमाध्यमेन स्पष्टं ज्ञापयति यदहमीश्वरकृपया तद्द्वारा समुपदिष्टगार्हस्थ्यधर्मपालनाय इमां कन्यां स्वीकरोमि। अहं वरः इयं वधूश्च वर्त्तमानकालात् प्राग् ब्रह्मचर्याश्रमे आस्व, साम्प्रतं सोद्घोषं सामाजिकपरम्पराऽनुकूलं सर्वेषां सम्मुखम् आवां वरवधूत्वेन दाम्पत्यं स्वीकुर्वः। नैतदावयोरसामाजिकं कर्म, अपितु अग्रतः एवास्मत्पूर्वजैर्विदितवेदितव्यैर्विद्वद्भिरयमाश्रमोऽङ्गीकृतः। वेदानुमोदितं खल्विदं कर्म, यथोक्तं वेदेषु—"देवा अग्रे न्यपद्यन्त पत्नीः समस्पृशन्त तन्वस्तनूभिः" "सं पितरावृत्विये सृजेथाम्" प्रजां कृण्वाथामिह पुष्यतं रयिम्", "तां पूषञ्छिवतमामेरयस्व०", "जनियन्ति नावग्रवः पुत्रीयन्ति सुदानवः", अ० 14.2. 32, 37, 38, 72, इत्यादि। इयं वधूः विवाहानन्तरं पतिगृहं गत्वा गार्हस्थ्यव्रतं धारयिष्यति। गृहस्थाश्रमे बाधकभूताः कामक्रोधलोभमोहभयाहङ्काररूपा आध्यात्मिकाः, ज्वराद्यामया दुष्टजनादयश्चाधिभौतिकाः, अतिवृष्ट्यनावृष्ट्यादय आधिदैविकाश्च शत्रवः पदे पदे आक्रामन्ति। "अहं वरो वध्वा सह गृहस्थधर्ममनुपालयन् तान् सर्वविधान् शत्रून् जेष्यामि" इति द्वितीयमन्त्रेण स उद्घोषयति।

इत्थं वधूवरौ परिक्रम्य यज्ञकुण्डस्य पश्चिमभागे पूर्वाभिमुखौ किञ्चित्कालं तिष्ठतः। अनेन विधिना तौ तावत्कालं पूर्वदिगवलम्बिनः सूर्यस्य गुणान् स्वस्मिन् धारयितुं संकल्पेतामिति ज्ञाप्यते।

प्रदक्षिणासमये वधूरग्रे, पतिस्तत्पृष्ठे, कलशपुरुषश्च तयोरनु, इतिक्रमेण यज्ञकुण्डं परिक्रामन्ति। यद्यपि संस्कारविधौ क्रमस्योल्लेखो नैव कृतः, तथापि खादिरगृह्यसूत्रेऽस्य संकेतो दृश्यते। तत्रोक्तम्—"अनुपृष्ठं गत्वा दक्षिणतोऽवस्थाय वध्वञ्जलिं गृह्णीयात्। हुते तेनैव गत्वा प्रदक्षिणमग्निं परिणयेत् कन्यला पितृभ्य इति।", 1.3.17,24। पौराणिकविधौ वधूमग्रतः कृत्वाऽग्निप्रदक्षिणा प्रसिद्धा।[32] अनेन विधिना पतिर्वधूमनुगच्छन् स्वकर्त्तव्यमनुस्मरति, अपरञ्च वधूमग्रे कृत्वा तां प्रति संमानं

32- "वधूमग्रतः कृत्वा परिक्रमेत् (अग्रे तु शुभदा पत्नी माङ्गल्ये सर्वकर्मणि" इति सं भा० वचनात्) नित्यानन्दपन्तपर्वतीयविरचितः संस्कारदीपकः, भा० 2 पृ० 151

प्रकटयति। कलशपुरुषस्तु घटप्रपूरितस्वच्छजलमाध्यमेन वरवधूभ्यां गृहस्थजीवनस्य स्वच्छमधुरव्यवहारान् संदिशति। पूर्णो घटश्च पूर्णताया द्योतकत्वात् मङ्गलरूपोऽपि मन्यते।

## 6- प्रदक्षिणा: कति

अत्र प्रदक्षिणाश्चतस्रः क्रियन्त इति केचित्। तिस्रः सम्पादनीया इत्यपरे। मानववाराहगृह्यसूत्रयोः स्पष्टतया चतस्रः प्रदक्षिणाः प्रतिपादिताः। तत्र सूत्रितम्—"चतुः परिणयति०" इति।[33] पारस्करगृह्यसूत्रे प्रोक्तम्—"अथ परिक्रामतः तुभ्यमग्ने०···एवं द्विरपरं लाजादि। चतुर्थं शूर्पकुण्ठ्या सर्वांल्लाजानावपति भगाय स्वाहेति। त्रिः परिणीतां प्राजापत्यं हुत्वा।" इति।[34] अत्र टीकाकाराणां मतभेदो दृश्यते। तत्र कर्कजयरामगदाधराचार्यास्तिस्र एव प्रदक्षिणाः सम्पादनीया इति प्रोचुः। तैरुक्तम्—"त्रिः परिणीतामिति त्रिर्ग्रहणमितरथावृत्तिव्युदासार्थम्" इति। हरिहरमिश्रस्तावत् प्रस्तुतसूत्रव्याख्यायां चतस्रः प्रदक्षिणाः प्रतिपादयति। तेनोक्तम्—"ततस्तृतीयपरिक्रमणानन्तरं कुमारी "भगाय स्वाहेति मन्त्रेण चतुर्थं जुहोति। ततः समाचारात् तूष्णीं चतुर्थं परिक्रमणं वधूवरौ कुरुतः···" इति। पारस्करगृह्यसूत्रस्य हिन्दीटीकायां[35] हरिदत्तशास्त्रिणाऽपि हरिहरमतं समर्थितम्। गोभिलगृह्यसूत्रे तिस्र एव प्रदक्षिणाः स्पष्टशब्दैः प्रतिपादिताः। तत्र सूत्रितम्—"हुते पत्निर्यथेतं परिक्रम्य एव प्रदक्षिणमग्निं परिणयति मन्त्रवान् ब्राह्मणः "कन्यला पितृभ्य" इति। एवन्त्रिः।" इति।[36] आपस्तम्बखादिरगृह्यसूत्रे अपि तिस्र एव प्रदक्षिणा वर्णयतः।[37] आश्वलायनगृह्यसूत्रे प्रदक्षिणास्तिस्र एवोक्ताः, होमश्च चतुर्थवारमपि क्रियते स च तूष्णीम्—"अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम्" इति।[38] शांखायनगृह्यसूत्रानुसारम् अश्मारोहणाग्निपरिक्रमालाजाहोमाद्या विधयस्त्रिर्मन्त्रोच्चारणपुरस्सरम् एकवारं च मौनरूपेण सम्पाद्यन्ते।[39]

---

33- क्र०-10.18; 14.33

34- पा० गृ० 1.7.3-6

35- भारतीयविद्याभवन, वाराणसीतः प्रकाशिता।

36- गो० गृ० 2.2.8, 10

37- आप० गृ० 2.5.2-11; खा० गृ० 1.3.16-25

38- आ० गृ० 1.7.14

39- शां० गृ० 1.13.12-17; 14.1-4

स्वामिदयानन्दकृतसंस्कारविधौ विवाहसंस्कारस्य प्रदक्षिणा-प्रकरणे या भाषा विद्यते सा खल्वस्पष्टा। संस्कारचन्द्रिकाकारैः[40] प्रस्तुतभाषा किञ्चित्त्रुटितेव वर्त्तत इति प्रतिपादितम्। ते खलु "समाचारात् तूष्णीं चतुर्थं परिक्रमणं कुरुतः" इति पा० गृ० सूत्रस्य हरिहर-टीकामुद्धृत्य "ओं भगाय स्वाहा" इति मन्त्रेण लाजाहुतिं प्रदाय तदनन्तरं समौनं चतुर्थी प्रदक्षिणाऽपि भवति, यस्या विधानं स्वामिनो लेखे केनचित् कारणेन स्खलितमिति मन्यन्ते। आद्यासु तिसृषु परिक्रमासु वधूरग्रे पतिस्तत्पृष्ठे, चतुर्थपरिक्रमायाञ्च वरोऽग्रे वधूस्तत्पृष्ठे प्रदक्षिण-मग्नि परिक्रामेदिति च टिप्पण्यामाटीकितम्।[41]

अथात्र विचार्यते। महर्षिदयानन्दकृतसंस्कारविधेः सम्पूर्णविवाह-संस्कारस्य पारायणेन ज्ञायते यत् तत्र साकल्येन पञ्चप्रदक्षिणा विहिताः। प्रथमा विवाहयज्ञारम्भतः पुरस्तात् "ओं समञ्जन्तु विश्वेदेवाः" इत्यादीनां चतुर्णां मन्त्राणां पाठं कृत्वा वरवधूभ्यां सम्पाद्यते। द्वितीया पाणिग्रहणानन्तरं शिलारोहणतः पुरस्तात् वरवधूभ्यां विधीयते। शिष्टाश्च तिस्रः प्रदक्षिणा लाजाहुतिप्रकरणे क्रियन्ते। एतासु पञ्च-प्रदक्षिणासु प्रथमा न विवाहाङ्गं, यतो हि सा विवाहयज्ञारम्भात् पूर्वं क्रियते। अवशिष्टाश्चतस्र एव विवाहप्रदक्षिणा भवन्ति। एतन्मनसि ध्यात्वैव संस्कारविधेः प्रस्तुतप्रकरणस्य समाधानमन्वेषणीयम्। तत्र महर्षिर्लिखति—

"तत्पश्चात् पूर्वोक्त प्रकार कलश सहित यज्ञकुण्ड की प्रदक्षिणा कर, पुनः दो बार इसी प्रकार, अर्थात् सब मिलके 4 बार परिक्रमा करके, अन्त में यज्ञकुण्ड के पश्चिम में थोड़ा ठड़े रहके, उक्त रीति से तीन बार क्रिया पूरी हुए पश्चात् यज्ञकुण्ड के पश्चिम भाग में पूर्वाभिमुख वधू वर खड़े रहें।"

कलशपुरुषसहितं वधूवरौ यज्ञकुण्डस्य प्रदक्षिणां विधाय, पुनरपि तथैव द्विवारं प्रदक्षिणां कुरुतः। इमास्तिस्र एव संजाताः। तर्हि कथमिदं संगच्छते "अर्थात् सब मिलके चार परिक्रमा करके" इति। यदि च साकल्येन चतस्रो भवन्ति तदा "उक्त रीति से तीन बार क्रिया पूरी हुये पश्चात्" इत्यसमञ्जसं प्रतिभाति। अस्मन्मते तु नात्र काचिद् विसंगतिः।

---

40- संस्कारचन्द्रिका—आत्माराम अमृतसरी, भीमसेन, हरिदत्तशास्त्री, सत्य-प्रकाशन, मथुरा, पृ० 257

41- तदेव पृ० 258-59

प्रस्तुते लाजाहोमप्रकरणे तिस्र एव प्रदक्षिणा महर्षेरभिमता, अत उच्यते "उक्त रीति से तीन बार क्रिया पूरी हुये पश्चात्" इति। पाणिग्रहणकाले कृतां प्रदक्षिणां गणयित्वा तु चतस्रः सम्पद्यन्ते, अत उक्तं "सब मिलके चार परिक्रमा करके" इति। यश्च चतुर्थ्या मौनप्रदक्षिणायाः परिणामः संस्कारचन्द्रिकाकारैः समाकृष्टो न स महर्षेरभिमतः प्रतीयते। कामं कैश्चिद् गृह्यसूत्रकारैस्तट्टीकाकारैर्वा चतुर्थी मौनप्रदक्षिणाऽत्र स्वीकृता भवेत्। "ओं भगाय स्वाहा" इति मन्त्रेण महर्षिणाऽवशिष्टलाजानामाहुति-रेव विहिता, न तत्साकं प्रदक्षिणापि। महर्षेः लेखे स्पष्टे सति, तत्र स्खलतया किञ्चिद् वाक्यं मुद्रणात् परित्यक्तमिति कष्टकल्पनैव। वहुषु स्थलेषु महर्षेर्गृह्यसूत्रकारेभ्यो मतभेदो विलोक्यते, तथैवात्रापि भवितु-मर्हति। किंच प्रस्तुते गृह्यसूत्रकारा अपि सर्वे न तावदैकमत्यमुररी-कुर्वन्तीति, केषांचिन्मतेऽत्र तिस्रः प्रदक्षिणाः कर्त्तव्याः केषांचिच्च चतस्र इति प्राक् प्रदर्शितमेव।

## 7- शिष्टलाजाहुतिः घृताहुतिश्च

एवं तिस्रः (साकल्येन चतस्रः) प्रदक्षिणाः कृत्वा यदा वधूवरौ यज्ञकुण्डस्य पश्चिम भागे पूर्वाभिमुखमुपतिष्ठतस्तदा वध्वा माता भ्राता वा शूर्पं तिर्यक्कृत्य शिष्टान् लाजान् वध्वञ्जलौ आवपति। वधूश्च—

"ओं भगाय स्वाहा॥ इदं भगाय इदन्न मम॥"[42]

इति मन्त्रं पठित्वा प्रज्वलिताग्नौ लाजान् जुहोति। ततो वरो वधूं दक्षिणभागे कृत्वा यज्ञकुण्डस्य पश्चिमे भागे पूर्वाभिमुखमुपविश्य —

"ओं प्रजापतये स्वाहा॥ इदं प्रजापतये इदन्न मम।"[43]

इति मन्त्रमुच्चार्य स्रुचा एकां घृताहुतिं जुहोति।

**अभिप्रायः**--"ओं भगाय स्वाहा" इति मन्त्रेण एकाकिनी कन्या लाजान् जुहोति, "ओं प्रजापतये स्वाहा" इति मन्त्रेण च एकाकी वरो घृतं जुहोति। प्राक् संयुक्ताञ्जलिभ्याम् उभौ मिलित्वा लाजान् जुहुतः। तत्र संयुक्ताञ्जलिना गार्हस्थ्यकर्मसु उभयोः संयुक्तमुत्तरदायित्वमिति द्योत्यते। अत्र पृथगाहुतिदानेन वधूर्वरश्चान्यस्याभावे स्वयमेकोऽपि गृहस्थकर्मण्युत्साहेन सम्पादयेदिति सूच्यते। एकाकिनी वधूर्लाजान्

---

42- पा० गृ० 1.7.5

43- पा० गृ० 1.7.6

जुह्वती प्रकटयति यदहं स्वयमप्यात्मरक्षायै समर्थाऽस्मि। धान्यवत् पितृकुलं परिहाय पतिकुलं व्रजामि। इदं मम पतिगृहगमनकर्म भगाय कल्याणाय भवतु। वरश्च सर्वमिदं प्रजापतये परमेश्वरायेति पूर्णसमर्पणभावनया घृतं जुहोति।

## 8· केशमोचनम्

लाजाहुतीनामनन्तरं वरो वध्वा सहैकान्तदेशं गत्वा निम्नमन्त्राभ्यां वधूकेशान् प्रमुञ्चति—

ओं प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाबध्नात् सविता सुशेवः।
ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टान्त्वा सह पत्या दधामि ॥ 1 ॥
ओं प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम्।
यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगासति ॥ 2 ॥[44]

**मन्त्रार्थः**—हे वधु सुशेवः शोभनसुखप्रदः, सविता जनकस्तव पिता, त्वां येन ब्रह्मचर्यनियमादिपाशेन अबध्नात् बबन्ध, वरुणस्य वरणीयस्य जनकस्य तस्मात् पाशात् बन्धनात् त्वा त्वाम् अहं प्रमुञ्चामि प्रकृष्टतया त्याजयामि। ऋतस्य योनौ यज्ञस्य स्थाने सुकृतस्य लोके पुण्यस्य स्थाने पतिगृहे अरिष्टाम् अहिंसिताम् अक्षतां त्वा त्वां पत्या सह पतिरूपेण स्वात्मना सह दधामि धारयामि ॥ 1 ॥

हे मीढ्वः सुखादिसेचक इन्द्र ऐश्वर्यशालिन् परमेश्वर, अहम् इमां कन्याम् इतः पितृकुलात् प्रमुञ्चामि दूरमानयामि, अमुतः अस्मात् पतिगृहात् न नैव प्रमुञ्चामि। अमुतः पतिगृहतस्तु इमां वधूं सुबद्धां दृढसम्बन्धयुतां करम् करोमि। यथा येन इयं सम्मुखे स्थिता वधूः सुपुत्रा सुपुत्रवती सुभगा सौभाग्यशालिनी च असति भूयात् ॥ 2 ॥

**अभिप्रायः**—अभिप्रायस्तु मन्त्रार्थे स्पष्टः। वधूः खलु विवाहात् पूर्वं पितृगृहे बहुभिर्नियमैर्बद्धा भवति। न तत्र तस्यै स्वातन्त्र्यम्। कुमारीधर्मपतनभयात्तदुपरि नियन्त्रणस्याधिक्यं तिष्ठति। यदा तस्योद्वाहो जायते तदा पतिः पर्याप्तं स्वातन्त्र्यं प्रयच्छति। तथा च विवाहकालपर्यन्तं कन्याया यद्ब्रह्मचर्यबन्धनं बभूव तदपि सन्तानोत्पत्त्यै स श्लथयति। यद्वा पितृगृहं प्रति यन्मोहबन्धनं मातरं पितरं भ्रातरं

44- ऋ० 10.85.24-25; अ० 14.1.19, 18; तै० सं० 1.1.10.2; 3.5.6.1-2; मै० सं० 1.5.16, 17; आ० गृ० 1.7.16-18

भगिन्यादिकं च प्रति आसीत् तन्मोहबन्धनं प्रतीकरूपेण केशमोचन-द्वाराऽपाकरोतीति द्योत्यते।

## 9- ग्रन्थिबन्धनं सप्तपदी च

केशमोचनान्तरं सप्तपदीविधिः सम्पाद्यते। एतदर्थं वरस्योपवस्त्रेण वध्वा उत्तरीयवस्त्रं ग्रथ्यते। ग्रन्थिवन्धनपुरःसरञ्च वरवधूभ्यां सप्तपदी क्रियते।

**अभिप्रायः**—ग्रन्थिर्यथा सुदृढः सुवद्धश्च भवति तथैव वरवध्वोः स्नेहग्रन्थिर्यावज्जीवनं सुदृढो भवेन्मध्ये नैव त्रुट्येदित्यनेन सूच्यते। ग्रन्थिः खलु स्मरणस्यापि प्रतीकम्। लोके कस्यापि वस्तुनो वृत्तस्य वा स्मरणाय पटे ग्रन्थिः क्रियते। अत्रापि अनुपदमेव क्रियमाणे सप्तपदी-विधौ प्रतिपदनिक्षेपं या भावना उपदिश्यते तासां स्मरणं गृहस्थजीवने सदैव भवेदिति सूच्यते।

ग्रन्थिबन्धनतः पश्चात् वधूवरौ आसनादुत्थाय यज्ञकुण्डस्योत्तर-भागं गच्छतः, वरस्तदा निजदक्षिणहस्तेन वध्वा दक्षिणहस्तं गृह्णाति। ततो वरो निजदक्षिणहस्तं वध्वा दक्षिणस्कन्धे निदधाति, उभौ च सामी-प्येनोत्तराभिमुखमुपतिष्ठतः। वरश्च "मा सव्येन दक्षिणमतिक्राम"[45] इत्युच्चार्य वधूं दक्षिणेन पदा चलितुमादिशति। एकैकशो निम्नसप्त-मन्त्राणामुच्चारणपुरस्परं स ईशानदिशं प्रति वध्वा सह सप्तपदानि चलति। तस्य विधिः स्वामिना टिप्पण्यामेवं वर्णितः। वधूर्निजं दक्षिण-पादमुत्थाप्य ईशानदिशि किञ्चिदुपसर्पेत्। ततः सव्यं पादमुत्थाप्य दक्षिणपादस्य गुल्फपर्यन्तमानयेत्। दक्षिणपादस्य किञ्चित् पश्चाद् वामपादं स्थापयेदित्यर्थः। इयमेकपदो। एवमेकैकशः प्रतिमन्त्रोच्चारणं सप्तपदों कुर्यात्। सप्तपद्याः सप्त मन्त्रास्तावदिमे सन्ति—

ओम् इषे एकपदी भव सा मामनुव्रता भव
विष्णुस्त्वानयतु पुत्रान् विन्दावहै वहूंस्ते सन्तु जरदष्टयः॥ 1 ॥
ओम् ऊर्ज्जे द्विपदी भव ·· · ······ ॥ 2 ॥
ओं रायस्पोषाय त्रिपदी भव०······ ॥ 3 ॥
ओं मयोभवाय चतुष्पदी भव०·········॥ 4 ॥
ओं प्रजाभ्यः पञ्चपदी भव०···········॥ 5 ॥

---

45- गो० गृ० 2.2.13

ओं ऋतुभ्यः षट्पदी भव०…………॥ 6 ॥
ओं सखा सप्तपदी भव०… ……… ॥ 7 ॥[46]

**मन्त्रार्थः**—हे वधु, इषे अन्नप्राप्त्यै "इषमित्यन्ननाम", निघं० 2.7, एकपदी भव पदमेकम् अग्रे स्थापय। ऊर्ज्जे बलप्राणादिलाभाय, ऊर्ज बलप्राणनयोः, द्विपदी भव द्वितीयं पदं सम्मुखे कुरु। रायस्पोषाय धनस्य पुष्ट्यै त्रिपदी भव तृतीयं पदं पुरतश्चल। मयोभवाय सुखोत्पत्तये "मय इति सुखनाम" निघं० 3.6, चतुष्पदी भव चतुर्थं पदं पुरो निधेहि। प्रजाभ्यः पुत्रप्राप्त्यै पञ्चपदी भव पञ्चमं पदमग्रे कुरु। ऋतुभ्यः ऋत्वनुकूलं व्यवहारसिद्धये षट्पदी भव षष्ठं पदं सम्मुखे धारय। सखे सख्याय सप्तपदी भव सप्तमं पदमग्रे निधेहि। सा तादृशी तत्तदुद्देश्येन एकैकं पदं निदधाना सहधर्मिणी त्वम् माम् अनुव्रता मद्व्रतानुकूला मत्परायणा भव। विष्णुः सर्वव्यापकः ईश्वरः त्वा त्वां नयतु सप्त पदानि क्रामयतु। आवां बहून् नैकान् पुत्रान् तनयान्, एकशेषेण पुत्रेषु पुत्रीणामपि ग्रहणम्, विन्दावहै प्राप्नुयाव। ते पुत्राः जरदष्टयः दीर्घजीविनः सन्तु जायेरन्।

**अभिप्रायः**—विवाहसंस्कारे सप्तपदीविधिः प्रमुखतमः। यथोक्तं मनुना—"पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥" इति मनु० 8.227। "नोदकेन न वाचा च कन्यायाः पतिरिष्यते। पाणिग्रहणसंस्काराद् पतित्वं सप्तमे पदे ॥" इति यमः, "तत्रापि न पाणिग्रहणे जायापतित्वं कृत्स्नम्, कृत्स्नम् हि जायापतित्वं सप्तमे पदे ॥" इति हारीतः। "स्वगोत्राद् भ्रश्यते नारी विवाहाद् सप्तमे पदे ॥[47] विधेरभिप्रायस्तु मन्त्रार्थैः स्पष्टः। प्रगतिशीलो वरः सप्तपदीविधिना गार्हस्थ्यजीवने समुन्नतेरुत्तुङ्गशिखरमधिगन्तुं करणीयानामावश्यककर्त्तव्यानां विषये सहधर्मिणीं वधूं बोधयति। "इषे एकपदी भव" इत्यनेन स अन्नमाहात्म्यं वर्णयति। जीवनायान्नं खलु सर्वाधिकमावश्यकं द्रव्यम्। यथोक्तम्—

46- तु०—आश्व० गृ० 1.7.19; पा० गृ० 1.8.1-2; गो० गृ० 2.2.11; आप० गृ० 2.4.15-16; खा० गृ० 1.3.26; वै० गृ० 3.4; बौ० गृ० 1.1.18; हि० गृ० 1.21.2; अग्नि० गृ० 1.6.1; भा० गृ० 1.17; शां० गृ० 1.14.6; का० गृ० 25.42; मा० गृ० 1.11.18; कौ० गृ० 1.14; वा० गृ० 15.18-19;

47- एतानि वाक्यानि कृत्यकल्पतरोर्विवाहप्रकरणाद् उद्धृतानि।

"अन्नं हि प्राण:" इति, श० ब्रा० 6.6.4.5। नान्नं विना गृहस्थाश्रमे सुखमेधते। अन्नेन च विविधभोजनानां पाकविद्यायां तस्या: प्रवीणत्वं भवेदिति द्योत्यते। उर्जं बलमति दाम्पत्यजीवने आवश्यकम्। नायं गृहस्थाश्रमो बलहीनै: सेव्यते, यथोक्तं मनुना—"योऽधार्यो दुर्बलेन्द्रियै:" इति, मनु० 3.79। अथर्ववेदे नारी "वीरिणी"[48] स्मृता, सैव वीरप्रसवा भवितुमर्हति। बलञ्च संयमितजीवनेन शुद्धाचारविचारेण श्रमेण च प्राप्यत इति वधूर्विषयासक्तिविरहिता शुद्धमनस्का परिश्रमिणी च स्यादिति द्वितीयमन्त्रेण सूच्यते। "ऊर्ज्" शब्द: प्राणार्थकोऽपि भवति। वधू: प्रशस्तप्राणापि जायेत, यतो यस्या: प्राणशक्तिर्न प्रबला सा सद्य एव रोगादिभिरभिभूयते। ऋते धनैश्वर्यं गृहस्थो नरकायैवेति सुतरां प्रत्यक्षम्। अत एवाथर्ववेदे प्रोक्तम्—"ध्रुवं भगं संभरतं समृद्धम्" इति 14.1.31। वधूर्हस्तशिल्पकलादिमाध्यमेन मितव्ययेन च धनं वर्द्धयेदिति सूच्यते। यद्वा रायस्पोषाय ज्ञानरूपधनवृद्ध्यर्थं वरस्तां प्रेरयति। अविद्या हि सर्वदु:खानां मूलम्। यथोक्तम्—"अविद्या क्षेत्रमुत्तरेषां प्रसुप्त-तनुविच्छिन्नोदाराणाम्" इति, यो० द० 2.4। वधूर्गृहस्थजीवने ज्ञानवती विवेकशीला च स्यादित्यनेनोपदिश्यते। चतुर्थमन्त्रे मय:शब्देन सुखमनामयं च विवक्षितम्। परिवारस्य सुखमारोग्यं दीर्घजीवनं च गृहस्वामिन्या अधीनमिति तदर्थं सा प्रेर्यते। पञ्चममन्त्रेण वरो वधूं प्रजाभ्य: प्रेरयति। गृहस्थजीवनेऽनपत्यता कलङ्कत्वेन वरीवर्ति। यथोक्तम्—अच्छायश्चैकशाखश्च निष्फलश्च यथा द्रुम:। अनिष्टगन्धश्चैकश्च निरपत्यस्तथा नर:॥ मङ्गल्योऽयं धन्योऽयं वीर्यवानयम्। बहुशाखोऽयमिति च स्तूयते ना बहुप्रज:॥" इति च० सं० अ० 2 श्लो० 9-10। वेदेष्वप्युक्तम्—"प्रजां कृण्वाथाम्" इति। अ० 14.2.37। षष्ठमन्त्रेण ऋत्वनुकूलमाहारविहाराच्छादनादिकाय स वधूं निर्दिशति। ऋतुशब्देन ऋतुगामित्वमपि संदिश्यते। सप्तमन्त्रेण च वरो वधूं सख्यभावाय वर्तितुमुपदिशति। पत्नी सखी भवति न तु दासीत्यनेन ध्वन्यते।

इत्थं सप्तपदीविधिना गृहाश्रमस्योद्देश्यप्राप्तये "चरैवेति चरैवेति" इत्यैतरेयब्राह्मणवाक्यं जीवनस्याधार: स्यादिति गृहस्थं प्रविविक्षू वरवध्वौ ज्ञाप्येते। वधूवरौ गृहस्थरूपस्य शकटस्य द्वे चक्रे स्त:। नैकं विना द्वितीयं रथचालने समर्थम्। एतदेव सप्तपदीविधौ वरवध्वो: समगत्या बोध्यते। "सा मामनुव्रता भव" इत्यनेन च वधू: पतिव्रता भवेदिति

48- अ० 20.126.9

संदिष्टम्। "विष्णुस्त्वा नयतु" इति मन्त्रांशेनोभाभ्यां वरवधूभ्यां सर्वव्यापकः परमेश्वरः स्मर्यते, यतो हि स एव सर्वेषां जीवनपथे पथप्रदर्शकः।

सप्तपद्यां "मा सव्येन दक्षिणमतिक्राम" इति नियमः कृतः। वधूः प्रथमं दक्षिणं चरणमग्रे स्थापयति पश्चाद्वामम्, वामेन च दक्षिणो नातिक्रम्यते। दक्षिणश्चरणोऽग्रगामितायाः प्रगतेश्च प्रतीकम्। यदा हि कश्चिदग्रे चलितुमुद्युङ्क्ते तदा दक्षिण एव चरणः प्राक् प्रसर्पति। अतोऽनेन विधानेनैतत् सूच्यते यत् सप्तपद्यां याः सप्त भावना द्योतितास्तासु गृहस्थाश्रमे उत्तरोत्तरं प्रगतिः कार्या। किं चैतदपि सूचितं भवति यद् वधूर्गृहस्थजीवने दक्षिणाङ्गवद् कर्मसु दक्षा भवेत् वामाचारिणी च न स्यात्।

ईशानदिशं प्रति सप्तपदीविधौ गमनं प्रतिपादितम्।[49] पूर्वोत्तरदिशोरन्तरालमीशान इति कथ्यते। अग्निः पूर्वदिशोऽधिपतिः सोमश्चोत्तरदिश इति वेदेषु प्रसिद्धम्।[50] पूर्वोत्तरदिशौ तेजोयुक्ते स्तः।[51] अनेनाग्निसोमरूपौ वरवध्वौ तेजस्विनौ स्यातामिति ज्ञाप्यते। गार्हस्थ्यजीवने नैव कदाप्याच्छादकस्तमोगुणः प्रकाशकं सत्त्वमभिभवेदिति च ध्वन्यते। सप्तद्वीपाया वसुमत्याः प्रतीकरूपेण सप्तैव पदानि चल्यन्ते।

तुलना—सप्तपदीमन्त्रा मूलसंहितासु नैव विद्यन्ते। तै० ब्राह्मणे[52] निम्नरूपेण प्राप्यन्ते—"एकमिषे विष्णुस्त्वान्वेतु। द्वे ऊर्जे विष्णुस्त्वा···। त्रीणि व्रताय···। चत्वारि मायोभवाय···। पञ्च पशुभ्यः···। षड्रायस्पोषाय ·। सप्त सप्तभ्यो होत्राभ्यः···। सखायः सप्तपदा अभूम। सख्यं ते गमेयम् सख्यात्ते मा योषम्। सख्यान्मे मा योष्ठाः" इति। कौशिकसूत्रानुसारं[53] सप्तपदीविधिसमये निम्नमन्त्रद्वारा भूमौ सप्तरेखा विलिख्यन्ते—"सप्त मर्यादाः कवयस्ततक्षुस्तासामिदेकामभ्यंहुरो गात्। आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणेषु तस्थौ", ऋ० 10.5.6; अ० 5.1.6, इति। ततो वरो रेखासु वधूं सप्तपदानि चालयति निम्नमन्त्रपाठैः—"इषे त्वा सुमङ्गलि प्रजावति सुसीमे,

---

49- द्र०—आ० गृ० 1.7.19

50- प्राची दिगग्निरधिपतिः०, उदीची दिक्सोमोऽधिपतिः, अ० 3.27.1, 4

51- आदित्या इषवः, अशनिरिषवः, अ० 3.27.1, 4

52- तै० ब्रा० 3.7.7.11-12

53- कौ० 76.21-24

ऊर्जे त्वा···, रायस्पोषाय त्वा···, सौभाग्याय त्वा···, साम्राज्याय त्वा···, सम्पदे त्वा···, जीवातवे त्वा···, सखा सप्तपदी भव" इति ।

## 9- कलशपुरुषद्वारा वरवध्वोर्मस्तिष्के जलसेचनम्

सप्तपदीविधेरनन्तरं वस्त्रग्रन्थिसहितौ वधूवरौ शुभासनमधितिष्ठत: । ततो दक्षिणदिगुपविष्ट: कलशपुरुष: कलशमुपगृह्य वरवध्वो: समीपमागत्य तयोर्मस्तिष्के जलं सिञ्चति । निम्नमन्त्रांश्च वर: पठति—

ओम् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ 1 ॥
यो व: शिवतमो रसस्तस्य भाजयतेह न: ।
उशतीरिव मातर: ॥ 2 ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च न: ॥ 3 ॥[54]
ओम् आप: शिवा: शिवतमा: शान्ता: शान्ततमास्तास्ते
कृण्वन्तु भेषजम् ॥ 4 ॥[55]

**मन्त्रार्थ:**—हे आप: जलानि, हि निश्चयेन, यूयं, मयोभुव: सुखस्य भावयित्र्य: स्थ भवथ, ता: तादृश्यो यूयं न: अस्मान् ऊर्जे बलाय प्राणशक्तये च, ऊर्जं बलप्राणनयो:, दधातन धत्त, बलप्राप्तियोग्यानस्मान् कुरुत, प्राणशक्तिं चास्मभ्यं दत्त । महे महते रणाय रमणीयाय चक्षसे दर्शनाय च दधातन, रमणीयतीव्रदृष्टिशक्तियुक्तान् कुरुतेत्यर्थ: ॥ 1 ॥

हे आप:, व: युष्माकं य: शिवतम: अतिशयेन सुखजनक: रस: सार: वर्त्तते, तस्य तं रसं सारम्, इह अस्मिन् शरीरे न: अस्मान् भाजयत सेवयत । उशती: पुत्रसमृद्धि कामयमाना:, वश कान्तौ, मातर: जनन्य इव । यथा ता: स्तन्यरसं सन्तानाय भाजयन्ति तथेत्यर्थ: ॥ 2 ॥

हे आप:, यूयं यस्य रोगपापादिकस्य, क्षयाय विनाशाय, अस्मान् जिन्वथ प्रीणयथ, जिवि प्रीणने, तस्य विनाशाय अरं पर्याप्तं व: युष्मान्

---

54- ऋ० 10.9.1-3; यजु० 11.50-52; 36.14-16; साम० 1837-39; अ० 1.5.1-3

55- पा० गृ० 1.8.5

वयं गमाम प्राप्नुयाम, युष्मान् शिरसि प्रक्षिपेमेत्यर्थः। हे आपः, नः अस्मान् जनयथ सन्तानजनने समर्थान् कुरुत ॥ 3 ॥

आपः जलानि शिवाः शंकारिण्यः, शिवतमाः अतिशयकल्याणकारिण्यः, शान्ताः सुखदात्र्यः, शान्ततमाः अतिशयसुखकारिण्यश्च सन्ति। ताः आपः ते तव भेषजं नैरोग्यं कृण्वन्तु विदधतु ॥ 4 ॥

**अभिप्रायः**—जलं पवित्रं, शीतलं, भिषक्तमं, शोधकम्, अमृतमयञ्च भवति। यथोक्तम्—"अप्स्वन्तरमृतमप्सु भेषजम्", अ० 1.4.4, "आप इद् वा उ भेषजीरापो अमीवचातनीः", अ० 3.7.5, "शुद्धा न आपस्तन्वे क्षरन्तु", अ० 12.1.30, इति। मस्तिष्के जलसेचनेन शीतलतानुभूयते। यथा जलं शीतलं शान्तिप्रदं पवित्रञ्च विद्यते तथैव वरवधूभ्यां निजमस्तिष्कं शीतलत्वपावनत्वादिभिर्गुणैरन्वितं विधेयमिति ज्ञाप्यते। जलं यथा दोषमपाकृत्य द्रव्याणि शोधयति सुखं शान्तिञ्च प्रयच्छति तथैव मस्तिष्कस्य पवित्रविचारैः स्वस्य समाजस्य च त्रुटीरपाकृत्य नम्रतामृदुत्वादिगुणा ग्रहीतव्याः। उभयोर्यद् ग्रन्थिबन्धनं विहितं तदपि तदैव सुदृढं भवति यदा वधूवरौ गृहस्थजीवने जलवच्छान्तियुतौ गुणान्वितौ दोषापवारकौ पवित्रौ च भवतः।

तुलना—आश्वलायनगृह्यसूत्रं[56] वरवध्वोरुभयोः शिरसि सन्निधाय जलं सिञ्चेदिति प्रतिपादयति। जलसेचनविधौ मन्त्राणामुल्लेखस्तत्र नैव कृतः। गोभिलगृह्यसूत्रं[57] जलसेचनविधौ निम्नमन्त्रं विनियोजयति—"समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ। समु०…" इति। मानववाराहगृह्यसूत्रे "खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपालामिन्द्रस्त्रिः पूर्त्व्यकृणोत् सूर्यत्वचं" इति मन्त्रेण जलसेचनं वर्णयतः।

## 10- सूर्यावलोकनम्

ततो वरवधूभ्यामासनादुत्थाय निम्नमन्त्रं पठित्वा सूर्यदर्शनं क्रियते—

---

56- आ० गृ० 1.7.20

57- गो० गृ० 2.2.14-15

58- मा० गृ० 8.11; वा० गृ० 1.13.14-15

ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्र ब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥[59]

**मन्त्रार्थः**—तत् देवहितं देवेन प्रकाशस्वरूपेण परमेश्वरेण स्थापितं यद्वा देवेभ्यो हितकारि, शुक्रम् शुक्लं तेजोमयं शुद्धं, चक्षुः प्रकाशकं ज्योतिः सूर्यः, पुरस्तात् पूर्वदिशातः, उच्चरत् उद्गच्छति। वयं तत् शरदः शतं शतवर्षाणि पश्येम अवलोकयेम। शरदः शतं जीवेम प्राणान् धारयेम। शरदः शतं शृणुयाम शास्त्रवचनानि आकर्णयेम। शरदः शतं प्रब्रवाम उपयुक्तं वदेम। शरदः शतम् अदीनाः दारिद्र्यरहिताः स्याम भवेम। भूयश्च शरदः शतात् शतादप्यधिकानि वर्षाणि पश्येम जीवेम शृणुयाम प्रब्रवामाऽदीनाश्च स्याम।

**अभिप्रायः**— सूर्ये ये ये गुणा विद्यन्ते ते ते गुणा आत्मन्यपि सञ्चेया इति वरवध्वौ ज्ञाप्यते। सूर्यो यथा तेजस्वी नियमवान् परोपकारी मलापहारी देवहितः सर्वप्रकाशक आह्लादक उष्णश्च विद्यते तथैव गृहस्थेनापि भवितव्यम्। मस्तिष्के जलसेचनकाले धर्मात्मनः प्रति जलवच्छान्तिव्यवहारस्य शिक्षा दीयते चेदत्र सूर्यदर्शनविधौ खलान् प्रति मार्त्तण्डप्रचण्डप्रकाश इव रुद्ररूपाचरणं ज्ञाप्यते। सृष्ट्यां सूर्यस्य यावन् महत्त्वं तावदेव महत्त्वपूर्णेन गृहस्थेनापि भाव्यम्। सूर्यो यथा भौतिकान्धकारं निवर्त्य प्रकाशं वितरति तथा गृहस्थेनाविद्याऽन्याय-दारिद्र्याद्यन्धकारानपाकृत्य ज्ञानविज्ञानालोकैर्लोकोऽयं प्रकाशनीयः। सूर्यो यथा प्राच्यामुदेति दिवं चारोहति तथैव वरवधूभ्यामपि गृहस्था-श्रमे सततमुन्नतिः कार्या, सूर्याच्च जीवनं प्राप्याविकलेन्द्रियैः सद्भि-र्दीर्घायुष्यं लब्ध्वा सदाचारे प्रवर्तितव्यम्।

## 11- हृदयस्पर्शः

ततः वरः स्वदक्षिहस्तं वध्वा दक्षिणस्कन्धस्योपरिष्टान्नीत्वा तस्या हृदयं स्पृष्ट्वा निम्नमन्त्रं पठति—

---

59- य० 36.24; तु०—ऋ० 7.66.16; पा० गृ० 1.8.7

ओं मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु।
मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् ॥[60]

**मन्त्रार्थः**—हे वधु, ते तव हृदयम् अन्तःकरणम् आत्मानं च मम व्रते दधामि मत्कर्मानुकूलं सम्पादयामि । ते तव चित्तं मनः मम चित्तमनु मन्मनोऽनुकूलम् अस्तु भवतु । मम वाचं मदीयां वाणीं त्वम् एकमनाः एकाग्रचित्ता सती जुषस्व सेवस्व । प्रजापतिः प्रजापालकः परमेश्वरः त्वा त्वां मह्यम् मदर्थं नियुनक्तु प्रेरयतु ।

तथैव वधूरपि स्वदक्षिणहस्तेन वरहृदयं स्पष्ट्वाऽमुमेव मन्त्रमुच्चारयति मन्त्रार्थानुसारञ्च वरमेकचित्तीभावाय प्रेरयति ।[61]

**अभिप्रायः**—हृदयं मनो वा भावानां केन्द्रम् । वरवध्वौ परस्परस्य हृदयदेशं स्पृष्ट्वा प्रतीकरूपेणान्तःस्थविचारानुद्बोधयतः, येनोभयोर्हृदयमेकीभूतं स्यात् । मन्त्रे सुस्पष्टशब्दैरेतदुक्तम् । उभौ "मम चित्तमनु चित्तं ते अस्तु" इत्युक्त्वा अन्योऽन्यं चित्तानुकूल्याय प्रेरयतः । यत्सत्यम्, यस्मिन् गेहे सुखदुःखं वरवधूभ्यां कृते समानं भवति, यत्र दम्पती अन्योऽन्यस्य सुखदुःखमात्मनः सुखदुःखत्वेन मन्येते, संकल्पाः विचाराश्च यत्र समा भवन्ति तत्र न कदापि क्लेशा जायन्ते । मन्त्रस्य तृतीये पादे दम्पती अन्योऽन्यस्य वचोऽनुसर्त्तुं परस्परं प्रतिजानाते । पत्युर्वचनं जाया परिपालयेत्, जायायाश्च वचनं पतिस्तदैव गृहे सौख्यमेधते । अन्यथा गृहकलहाः प्रादुर्भवन्ति ।

**तुलना**—मा० गृ० सूत्रानुसारं[62] यदा वधूर्वरं पश्यति तदा वरेणायं मन्त्र उच्चार्यते । आग्निवेश्यगृह्यसूत्रे[63] हृदयस्पर्शतः पश्चात् नाभिस्पर्श-

---

60- पा० गृ० 1.8.8; मा० गृ० 1.10.13; इत्यत्र "दधामि" इत्यस्य स्थाने "दधातु" इति पाठः, भा० गृ० 1.17; बौ० गृ० 1.4.1; हि० गृ० 1.21.3; वै० गृ० 3.4; गो० गृ० 2.2.15; खा० गृ० 1.3.31; आग्नि० गृ० 1.6.3; मं० ब्रा० 1.2.21 इत्यादिष्वपि पाठभेदसहितः । आ० गृ० 1.21.7; शां० गृ० 2.4.1; पा० गृ० 2.2.16; जै० गृ० 11.15 सूत्रेषूपनयनकर्मण्यपि पठितः पाठभेदसहितः ।

61- यदा वध्वाध्यं मन्त्रः पठ्यते तदा मन्त्रार्थे हे वर·· एकमनाः एकाग्रचित्तः सन्···इति योजनीयम् ।

62- मा० गृ० 1.10.13

63- आग्नि० गृ० 1.22.4

विधिरपि विवाहकर्मणि ज्ञापितः। तत्र चायं मन्त्रो विनियुक्तः— "प्राणानां ग्रन्थिरसि स मा विस्रसः" इति।

## 12- वधूदर्शनमाशीश्च

तत्पश्चात् वरो वधूमस्तके निजहस्तमाधाय निम्नमन्त्रमुच्चार्य विवाहस्थले समुपस्थितान् जनान् प्रत्यवलोक्य तानाशीः प्रदानाय प्रार्थयते—

सुमङ्गलीरियं वधूरिमां समेत पश्यत।
सौभाग्यमस्यै दत्त्वायाथास्तं वि परेतन। [64]

**मन्त्रार्थः**—हे समुपस्थिताः सभ्याः, इयं वधूः परिणीता मम जाया, सुमङ्गलीः प्रशस्तमङ्गलस्वरूपा वर्त्तते। यूयं समेत समागच्छत, समागत्य चेमां पश्यत अवलोकयत। अस्यै सौभाग्यं सौभाग्याशीर्वचांसि, दत्त्वाय प्रदाय, छन्दसि क्त्वो यक्, अथ तदनन्तरमेव, अस्तं स्वगृहं विपरेतन गच्छत, छान्दसः तस्य तनवादेशः॥

तदानीं सर्वे जना निम्नवाक्याभ्याम् आशिषः प्रयच्छन्ति—

ओं सौभाग्यमस्तु। ओं शुभं भवतु॥

**अभिप्रायः**--आशिषां महत्त्वं सुविदितम्। आशीर्भिर्वरवध्वोरुत्साहो वर्धते। वरः स्वयमेव जनान् स्ववधूं द्रष्टुमामन्त्रयतीति विधिर्ज्ञापयति यन्नारीणाम् अवगुण्ठनप्रथा न वेदाभिमता।

**तुलना**—आ० गृ० सूत्रं ध्रुवदर्शनविधेरनन्तरं विधिममुं प्रतिपादयति, विवाहानन्तरञ्च वरगृहप्रयाणकाले वसतौ वसतौ ईक्षकान् वधूं दर्शयितुं मन्त्रमिमं विनियोजयति। तथा च सूत्रितम्--"वासे वासे सुमङ्गलीरियं वधूरितीक्षकानीक्षेत" इति।[65] विभिन्नगृह्यसूत्रेषु "सुमङ्गलीरियम्०" इति मन्त्रस्य विनियोगो विवाहसंस्कारस्यान्यप्रसङ्गेष्वपि कृतः। हि० गृ० सूत्रानुसारं[66] विवाहयज्ञात् प्राग् वरो वधूमवलोकयन्

---

64- ऋ० 10.83.33; अ० 1.2.18; तु०—गो० गृ० 2.2.13; आ० गृ० 1.8.7; जै० गृ० 20.10; बौ० गृ० 1.5.30; मा० गृ० 1.12.1; वा० गृ० 14.25; खा० गृ० 1.3.27; मं० ब्रा० 1.2.14; कौशिक 77.10

65- आ० गृ० 1.8.7

66- हि० गृ० 1.19.4

एनमुच्चारयति। का० गृ० सूत्रानुसारं[67] वध्वा वीक्षितानि ध्रुवादिनक्षत्राणि अनेन मन्त्रेण सम्बोध्यन्ते। आप० गृ० सूत्रानुसारं[68] वध्वां वरगृहं प्रविष्टायां यदा तत्क्रोडे कश्चिद्बालकः स्थाप्यते तदानीं वरो मन्त्रमिममुच्चारयति। वधूदर्शनस्य आशिषश्च पश्चात् पा० गृ० सूत्रम् इतरविधिमेकं प्रतिपादयति। यथा—"तां दृढपुरुष उन्मथ्य प्राग्वोदग्वानुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति इह गावो निषीदन्त्विहाऽश्वा इह पुरुषाः। इहोसहस्रदक्षिणो यज्ञ इह पूषा निषीदत्विति।"[69] ततः वधूदर्शनाशिषोऽनन्तरं तां वधूं दृढपुरुषः कश्चिद्बलवान् जन उन्मथ्य उत्थाप्य पूर्वस्यामुदीच्यां वा दिशि पूर्वकल्पिते सर्वतो वस्त्रपरिवृते अगारे गृहे आनडुहे आर्षभे लोहितचर्मणि उपवेशयति "इह गावः" इत्यादिमन्त्रस्य पाठान्ते इति भावः। उपर्युक्तविधिमनु पारस्करेणेदमभिहितं यद् विवाहसंस्कारे स्वकुलस्य वृद्धानां स्त्रीणां वचनं प्रमाणीकृत्य यत् ता ब्रूयुस्तदन्यद् विधानमपि समाचरणीयमिति।[70] अत एव साम्प्रतं गृह्यसूत्रेष्वनुक्तमपि मस्तके सिन्दूरदानादि निष्पाद्यते।

## 13- स्विष्टकृदाहुतिराज्याहुतयश्च

आशिषोऽनन्तरं वधूवरौ यज्ञकुण्डस्य समीपे पूर्ववदुपविश्य 'ओं यदस्य कर्मणो०" इत्यनेन स्विष्टकृन्मन्त्रेणैकामाज्याहुतिम्" "ओं भूरग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्व्याहृतिमन्त्रैश्चतस्र आज्याहुतीश्च जुहुतः। स्विष्टकृन्मन्त्रस्तावदयम्—

ओं यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्।
अग्निष्टत् स्विष्टकृद्विद्यात्सर्वं स्विष्टं सुहुतं करोतु मे।
अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां
कामानां समर्द्धयित्रे सर्वान्नः कामान्त्समर्द्धय स्वाहा॥
इदमग्नये स्विष्टकृते-इदन्न मम॥[71]

**मन्त्रार्थः**—अहम् अस्य कर्मणः अस्य विवाहयज्ञस्य यत् अत्यरीरिचम् विहितादधिकं कृतवान्, यद्वा अथवा इह अस्मिन् यज्ञे न्यूनं

67- का० गृ० 25.46
68- आप० गृ० 2.6.11
69- पा० गृ० 1.8.10
70- द्र०—पा० गृ० 1.8.11; आ० गृ० 1.7.1
71- आ० गृ० 1.10.22

प्रोक्तादल्पम् अकरम् अकार्षम्, स्विष्टकृत् यज्ञकर्म स्विष्टं शोभनतया सम्पादितं करोतीति सः, अग्निः परमेश्वरः अग्रणीः पुरोहितो वा तत् अधिकं न्यूनं वा कृतं विद्यात् जानीयात्, किंच सर्वम् अखिलं तत्, मे मम, स्विष्टं सम्यक्सम्पादितं, सुहुतं सम्यक् कृतहोमं करोतु विदधातु। अत एवाहं स्विष्टकृते यज्ञकर्मणः शोभनतया सम्पादकाय, सुहुतहुते सुहुतं सुष्ठुतया समर्पितं हव्यं जुहोति स्वीकरोतीति तस्मै, हु दानादनयोः आदाने चेत्येके, सर्वप्रायश्चित्ताहुतीनां सर्वासां प्रायश्चित्ताहुतीनाम् अधिकन्यूनकर्मकरणस्य प्रायश्चित्तस्वरूपं दत्तानामाहुतीनां, कामानाम् अभिलाषाणां च, समर्द्धयित्रे साफल्यापादकाय, अग्नये परमेश्वराय पुरोहिताय यज्ञाग्नये वा स्वाहा इमाम् आहुतिं प्रयच्छामि। हे अग्ने, त्वं नः अस्माकं, सर्वान् विश्वान् कामान् अभिलाषान् समर्द्धय पूरय। इदं समर्पणमाहुतिप्रदानं वा स्विष्टकृते अग्नये यज्ञकर्मसफलयित्रे परमेश्वराय पुरोहिताय यज्ञाग्नये वा विद्यते, इदं न मम न तु मह्यमित्यर्थः।

**अभिप्रायः**—वधूवरौ स्विष्टकृदाहुत्या अज्ञानेन सम्पादितेभ्यः कर्मभ्यः प्रायश्चित्तं कुरुतः। मानवस्याल्पज्ञत्वात् "गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः" इत्यनुसारं त्रुटयो भवन्त्येव। गार्हस्थ्यजीवने त्रुटीः कृत्वा वधूवरौ पुनस्ता नावर्त्तयेतामिति ज्ञाप्यते। व्याहृत्याहुतीनामर्थोऽभिप्रायश्च पूर्वं प्रदर्शितः।[72]

इति विवाहसंस्कारस्य पूर्वविधिः समाप्तः। पूर्वविधिं समाप्य वधूवरौ विश्राम्यतः।

०:—:०

72- द्र०—अध्यायः चतुर्थः, पृ० 106

# षष्ठोऽध्यायः

## 1- अग्न्याधानम्, समिदाधानम्, आहुतयश्च

गताध्यायेषु विवाहसंस्कारस्य पूर्वविधयो व्याख्याताः। पूर्वविधीन् समाप्य वधूवरौ किञ्चित्कालं विश्राम्यतः। विश्रामानन्तरं विवाहसंस्कारस्योत्तरविधयः सम्पाद्यन्ते। इमे सर्वे विधयो वधूगृहस्येशानदिशि पूर्वरचितयज्ञमण्डपे क्रियन्ते। अस्तमिते सूर्ये, दृष्टिपथमवतीर्णे च नक्षत्रमण्डले वधूवरौ यज्ञकुण्डस्य पश्चिमाशायां पूर्वाभिमुखमुपविशतः। ओं भूर्भुवः स्वर्द्यौरिव०" इत्यनेन मन्त्रेण चाग्न्याधानं कुरुतः। यदि प्रागेवाग्न्याधानं सम्पादितं भवेत्तर्हि पिष्टपेषणं नैव क्रियते। अग्न्याधानतः पश्चात् "ओम् अयन्त इध्म आत्मा०" इत्यादिभिश्चतुर्भिर्मन्त्रैः समिदाधानं कुरुतः। प्रदीप्ते चाग्नौ "ओम् अग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आघारावाज्यभागाहुतीः "ओं भूरग्नये स्वाहा" इत्यादिभिश्च चतस्रो व्याहृत्याहुतीर्जुहुतः।

## 2- प्रधानहोमः, व्याहृत्याहुतयश्च

एतासामाहुतीनामनन्तरं प्रधानहोम आरभ्यते। एभिः षड्मन्त्रैः षडाज्याहुतयो हूयन्ते—

ओं लेखासन्धिषु पक्ष्मस्वारोकेषु च यानि ते।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहं स्वाहा॥
इदं कन्यायै इदन्न मम॥ 1॥
ओं केशेषु यच्च पापकमीक्षिते रुदिते च यत्। तानि०॥ 2॥
ओं शीलेषु यच्च पापकं भाषिते हसिते च यत्। तानि०॥ 3॥
ओं आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत्। तानि०॥ 4॥
ओं ऊर्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते। तानि०॥ 5॥
ओं यानि कानि च घोराणि सर्वाङ्गेषु तवाभवन्।
पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमं स्वाहा॥
इदं कन्यायै इदन्न मम॥ 6॥[1]

---

1- गो० गृ० 2.3.6; खा० गृ० 1.4.3; जै० गृ० 20.17; मं० ब्रा० 1.3.1-6

**मन्त्रार्थः**—हे कन्ये, ते तव लेखासन्धिषु हस्तादिरेखासन्धिषु, रलयोरेकत्वस्मरणात्, पक्ष्मसु नेत्रलोमसु, आरोकेषु[2] आ समन्तात् रोकेषु रन्ध्रेषु च, आवर्त्तेष्विति पाठे[3] शरीरगर्त्तेषु रोमकूपेष्वित्यर्थः, केशेषु कुन्तलेषु, ईक्षिते, ईक्षणे, रुदिते रोदने च, शीलेषु स्वभावेषु चरितेषु वा, भाषिते भाषणे, हसिते हसने च, आरोकेषु[4] दन्तान्तरालेषु, दन्तेषु दशनेषु, हस्तयोः करयोः, पादयोः चरणयोश्च, ऊर्वोः सक्थ्नोः, उपस्थे गुह्येन्द्रिये, जङ्घयोः जघनयोः सन्धानेषु सन्धिभागेषु च, तथा सर्वाङ्गेषु अन्येष्वपरिगणितेषु शरीरावयवेषु वा यानि कानि प्रकृतान्यप्रकृतानि च कानिचित् घोराणि क्रूराणि अनिष्टकारीणि पापकानि दूषितानि च लक्षणानि सन्ति तानि सर्वाणि आज्यस्य घृतस्य पूर्णाहुतिभिः इष्टाहुतिभिरहं पाणिग्राहः शमयामि शान्तिं गमयामि नाशयामि, यद्वा अशीशमम् अनाशयम्, नष्टानि कृतानीति जानीहि। स्वाहा, अनया भावनया इदमाज्यं सुहुतमस्तु। इदं कन्यायै इमा आहुतयः कन्यामङ्गलार्थं जुहोमि न स्वार्थायेति भावः।

**अभिप्रायः**—उत्तरविधेरारम्भे आसां षडाज्याहुतीनां हवनं विशेषाभिप्रायेण क्रियते। विवाहसंस्कारस्य पूर्वविधौ सप्तपदीविधिसमाप्तिपुरस्सरं कन्या वधूत्वमाप्नोति वरश्च पतित्वम्। विवाहे संजाते सति पतिर्जायायां दोषान्नाविष्कुर्यात्, यदि च केचन दोषा भवेयुस्तानपाकुर्यादित्यनेन विधिना सूच्यते।

एषु मन्त्रेषु द्विविधदोषयोरपनयनं प्रतिपादितम्। स्वभावगतदोषा अङ्गगतदोषाश्च। विवाहार्थं कन्याचयनात् प्रागेव वरस्तत्पितरौ बान्धवाश्च कन्यां सम्यक्तया परीक्षयन्ते। तदनुसारञ्च कन्यां वृत्वा विवाहः सम्पाद्यते। तथा किञ्चिद् दूषणं वध्वाः शरीरे व्यवहारे वा संभवत्येव। अतो विवाहे सम्पन्ने सति कन्यायां याः काश्चन त्रुटयोऽल्पता वा स्वाभाविकतया संभवन्ति ताः प्रति वरस्य जुगुप्साभावो नैव स्यादित्येताभिराहुतिभिर्ज्ञाप्यते। यथा—ईक्षणे वक्रेक्षणं कुदृष्टिर्वा दोषः, रुदिते कटुक्रन्दनं दोषः, शीलेषु दुष्प्रवृत्त्यादयो दोषाः, भाषितेऽनृतभाषणमप्रियभाषणमस्पष्टभाषणमवरुद्धभाषणादयो दोषाः, हसिते

---

2- "छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रम्" (इत्यमरः) 1.8.2

3- अजमेरीयसंस्करणे, वि० सम्वत् 2034

4- "आरोकेषु अतिरिक्तदन्तेष्विति गुणविष्णुः, गो० गृ० सूत्रे

दुर्हास्यवक्रहास्यव्यर्थहास्यादयो दोषाः, एते स्वभावगतदोषाः, केशेषु पलितत्वं सज्जाराहित्यं मलिनत्वं पतनत्वं वा दोषः, दन्तान्तरालेषु कीटादिभिः शोथत्वपूतित्वमलिनत्वादयो दोषाः, दन्तेषु अतिलघुत्वातिदीर्घत्ववक्रत्वादयो दोषाः, हस्तयोः कृशत्वस्थूलत्वलघुत्वदीर्घत्वादयो दोषाः, उपस्थे क्षतयोनित्वव्रणत्वादिदोषाः। एतेऽङ्गगतदोषाः। एते दोषाः कन्याचयनकाले बहुधा नैव परिलक्ष्यन्ते। अतो विवाहे सम्पन्ने सति कन्यागतदोषाः वरस्यैव दोषाः भवन्ति वरस्य च कन्याया इति। तदानीं वरः चिकित्सयाऽङ्गगतदोषान् उपदेशेनाभ्यासेन च स्वभावगतदोषान् अपाकर्तुं प्रयतेत। दोषकारणेन सा वधूस्त्यागयोग्या गर्ह्या वा न भवत्यपितु तद्दोषापकरणपुरस्सरं साऽऽदरणीया भवतीति द्योतितं भवति। इमामेव भावनां वधूर्वरं प्रति मनसि निदध्यात्।

तुलना—गोभिलगृह्यसूत्रं खादिरगृह्यसूत्रञ्च षडाज्याहुतिसम्पादनसमये प्रत्याहुतिशिष्टाज्यं वधूशिरसि अवसिञ्चेदिति वर्णयतः। तत्र सूत्रितम्—आहुतेराहुतेस्तु सम्पातं मूर्द्धनि वध्वा अवनमयेत् इति।[5]

पारस्करगृह्यसूत्रे पञ्चाज्याहुतयः प्राप्यन्ते। मन्त्रा अपि तत्रेतरे पठिताः। चतुर्थीकर्मणि चायं विधिः प्रतिपादितः।[6]

इत्थं षडाज्याहुतीर्हुत्वा वरवध्वौ "ओं भूरग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्रो व्याहृत्याहुतीर्जुहुतः। आसामाहुतीनामभिप्रायः पञ्चमाध्याये प्रदर्शितः।

## 3. ध्रुवदर्शनम्

## 4. अरुन्धतीदर्शनं च

प्रधानहोमानन्तरं वधूवरौ यज्ञमण्डपादुत्थाय बहिर्निष्क्राम्यतः। उत्तरदिशं प्रति गत्वा "ध्रुवं पश्य" इत्येवमुच्चार्य वरो वधूं ध्रुवनक्षत्रं दर्शयति। वधूश्च "पश्यामि" इत्युक्त्वा पश्यति। ततः सा निम्नमन्त्रं पठति—

ओं ध्रुवमसि ध्रुवाहं पतिकुले भूयासम् (अमुष्य असौ)।[7]

---

5- गो० गृ० 2.3.7; खा० गृ० 1.4.3

6- पा० गृ० 1.11.2

7- अयं विधिः गोभिलगृह्यसूत्रमनुसरति। गो० गृ० 2.3.8.9; द्र०—जै० गृ० 22.13। "अमुष्य" इत्यस्य स्थाने पत्युः षष्ठीविभक्त्यन्तं "असौ" इत्यस्य स्थाने चात्मनः प्रथमाविभक्त्यन्तं नाम गृह्णीयादिति दयानन्दः।

मन्त्रार्थः—हे ध्रुवनक्षत्र, यथा त्वं ध्रुवं स्थिरत्वाद् ध्रुवनामकम् असि तथा असौ अमुकनाम्नी अहम् अमुष्य अमुकस्य पतिकुले पतिगृहे ध्रुवा ध्रुवनक्षत्रवन्निश्चला भूयासम् भवेयम्।

ततो वरो वधूं "अरुन्धतीं पश्य" इत्युक्त्वा अरुन्धतीनक्षत्रं दर्शयति। वधूश्च 'पश्यामि" इत्युच्चार्य पश्यति मन्त्रं चेमं ब्रूते—

ओम् अरुन्धत्यसि रुद्धाहमस्मि (अमुष्य असौ)।[8]

मन्त्रार्थः—हे अरुन्धति, यथा त्वं सप्तर्षिनक्षत्रमण्डलस्योपान्ते रुद्धा निबद्धाऽसि तथाऽहमपि स्वपतिकुले नियमेषु रुद्धा निबद्धाऽस्मि।

## 5- वरद्वारा वधूमस्तकस्पर्शः

ततो वरो वधूं दृष्ट्वा तस्या मस्तके च स्वहस्तमाधाय निम्न मन्त्रौ पठति—

ओं ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।
ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्॥[9]
ओं ध्रुवमसि ध्रुवन्त्वा पश्यामि ध्रुवैधि पोष्ये मयि।
मह्यं त्वादात् बृहस्पतिर्मया पत्या प्रजावती सं जीव
शरदः शतम्॥[10]

मन्त्रार्थः—यथा द्यौः द्युलोकः ध्रुवा निश्चला, पृथिवी भूमिः ध्रुवा निश्चला स्वस्वरूपे स्थिरेत्यर्थः, विश्वम् अखिलम् इदं प्रत्यक्षं जगत् चराचरं ध्रुवं प्रवाहस्वरूपे स्थिरम्, इमे पर्वताः नगाः ध्रुवासः सुस्थिराः वर्त्तन्ते, तथैवेयं स्त्री पत्नीरूपा मम वधूः, पतिकुले मद्गृहे ध्रुवा दृढवसतिर्भवतु। दाम्पत्यजीवने चपलाऽनुचितगतिर्वा मा भूदित्यर्थः।

हे पते, त्वं ध्रुवं ध्रुववद् दृढसंकल्पवानसि, ध्रुवं ध्रुववद् दृढसंकल्पवन्तं त्वा त्वाम् अहं तव पत्नी पश्यामि। अथ पत्युर्वचनम्। हे पत्नि, पोष्ये पोषयितुं योग्ये मयि त्वं ध्रुवा स्थिरा दृढचारित्रा एधि भव। बृहस्पतिः परमात्मा त्वा त्वां मह्यं मदर्थम् अदात् दत्तवान्। त्वं मया सह शरदः शतं वर्षशतं यावद् अधिकं च संजीव सम्यक् प्राणिहि।

---

8- गो० गृ० 2.3.10-11
9- मं० ब्रा० 1.3.7
10- पा० गृ० 1.8.19; तु०—शां० गृ० 1.17.3

अभिप्राय:--आभ्यां मन्त्राभ्यां वधूवरौ परस्परं दाम्पत्यव्रते सुदृढौ भवतः। ध्रुवनक्षत्रं यथा स्वस्थानं कदापि न जहाति तथैव वरवध्वौ पतिपत्नीत्वं नैव त्यजेताम्। अरुन्धती यथा वसिष्ठनक्षत्रेण सामीप्यं भजते, तथैव पत्नी पत्या सामीप्यं प्राप्नुयात्। यद्वा यथा वसिष्ठनक्षत्रं सप्तर्षिनक्षत्रमण्डले अरुन्धती च वसिष्ठनक्षत्रसमीपे ध्रुवतया तिष्ठति तथैव पतिः स्वपितृकुले पत्नी च तत्र पतिसान्निध्ये ध्रुवतया निवसेदित्यभिप्रायः। वधूः पतिव्रते वरश्च पत्नीव्रते सुदृढावास्तामिति ध्रुवारुन्धतीनक्षत्रयोर्दर्शनाभिप्रायः। "अरुन्धत्यरुद्धाहं पत्या भूयासम्" इति जै० गृ० पाठः, 22.14, तत्र—हे अरुन्धति, यथा त्वम् अरुन्धती वसिष्ठेन स्वसमीपेऽवस्थातुम् अनवरुद्धा असि, तथैव अहं पत्या अरुद्धा स्वसाहचर्येऽवस्थातुम् अनवरुद्धा अप्रतिषिद्धा भूयासमित्यर्थः समञ्जसः।

मस्तिष्के ध्रुवविचारा आधीयन्त इति मन्त्रोच्चारणसमये वरो वध्वाः शिरसि प्रतीकरूपेण निजहस्तं स्थापयति। पातिव्रत्यादिगृहस्थधर्मेषु ध्रुवीभावेन स्थातुं स वधूं सङ्केतयति, स्वयं च दाम्पत्यधर्मे दृढमाचरितुं संकल्पयति।

तुलना—पा० गृ० सूत्रे, खा० गृ० सूत्रे च ध्रुवदर्शनमात्रं प्रतिपादितम्।[11] गो० गृ० सूत्रं ध्रुवारुन्धत्योरुभयोर्दर्शनं वर्णयति।[12] आश्व० गृ० सूत्रं ध्रुवारुन्धत्योर्व्यतिरिक्तं सप्तर्षिदर्शनमपि प्रतिपादयति।[13] मा० गृ० सूत्रमपि सप्तर्षीणां दर्शनं वर्णयति।[14]

आप० गृ० सूत्रे "ध्रुवैधि पोष्या मयि०" इतिमन्त्रो विवाहकर्मणि विनियुक्तः, परं तत्रास्य विनियोगो वरवध्वोः ऋषभचर्मण्यासीनयोः, वरद्वारा दीयमानास्वाहुतिषु कृतः। ऋग्वेदस्यायं खिलमन्त्रो वर्त्तते, 10.85, इत्यनन्तरम्। सम्पूर्णमन्त्रस्तावदयम्—"ध्रुवैधि पोष्या मयि मह्यं त्वादाद् बृहस्पतिः। मया पत्या प्रजावती सं जीव शरदः शतम्॥" "ममेयमस्तु पोष्या" इति पाठभेदसहितोऽयं मन्त्रोऽथर्ववेदेऽपि, 14.1.52, पठितः। उभयोर्वेदयोरयं मन्त्रो विवाहसूक्ते पठितः।

---

11- क०–1.8.19; 1.4
12- गो० गृ० 2.3.8.12
13- आश्व० गृ० 1.7.22
14- मा० गृ० 1.4.10

आप० गृ०, हि० गृ०, भा० गृ०, बौ० गृ०, वै० गृ० सूत्रेषु ध्रुवदर्शनकाले भिन्नमन्त्रस्य विनियोगो विहितः[15] "ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवमसि ध्रुवतः स्थितम्। त्वं नक्षत्राणां मेथ्यसि स मा पाहि पृतन्यतः॥" आग्नि० गृ० सूत्रे[16] निम्नमन्त्रो विनियुक्तः—ध्रुवं नमस्यामि मनसा ध्रुवेण ध्रुवं नौ सख्यं दीर्घमायुश्च भूयात्। अरुन्धावस्मिंश्च परे च लोके ध्रुवं प्रविष्टौ स्याम शरणं सुखार्त्तौ॥" मा०गृ०, वा०गृ० सूत्रयोर्ध्रुवारुन्धतीजीवन्तीसप्तर्षिनक्षत्राणां दर्शनसमयेऽयं मन्त्रो विनियोजितः[17]—"अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम सर्वतः। ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुलेयम्॥" बौ० गृ० सूत्रं[18] अरुन्धतीनक्षत्रविषये निम्नमन्त्रं विनियुङ्क्ते—"सप्त ऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद् ध्रुवतां ह निन्युः। षट् कृत्तिका मुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धती।" जै० गृ० सूत्रानुसारं[19] अरुन्धतीदर्शनकाले निम्नवाक्यमुच्चार्यते—"अरुन्धत्यरुद्धाऽहं पत्या भूयासममुना" इति। खा० गृ० सूत्रे 'ध्रुवा द्यौः ध्रुवा पृथिवी" इत्यस्य मन्त्रस्य विनियोगो ध्रुवदर्शनसमये विहितः।[20] मन्त्रोऽयम् ऋगथर्ववेदयोस्तैत्तिरीयब्राह्मणे चापि वर्त्तते, परं तत्र चतुर्थपादस्य पाठः "ध्रुवो राजा विशामयम्" इति लभ्यते। अनेन स्पष्टं परिलक्षितं भवति यन्मन्त्रोऽयं राजकर्मणा सम्बद्धः। परं गृह्यसूत्रकारैः गृह्यकर्मानुसारं पाठभेदं विधाय विनियुक्तः।

आ० गृ०, शां० गृ० सूत्रानुसारं[22] नक्षत्रदर्शनतः पश्चाद् वध्वा निम्नवाक्ये उच्चार्येते—"ध्रुवं पश्यामि प्रजां विन्देय।" "जीवपत्नी प्रजां विन्देय" इति। हि० गृ० सूत्रमते[23] निम्नमन्त्रेण दिशः, नक्षत्राणि, चन्द्रमाश्चोपास्यन्ते—"देवीः षडुर्वीरुरुणः कृणोत विश्वे देवास इह वीरयध्वम्।

---

15- ऋ०—2.6.12; 1.22.14; 1.18, 1.5.13; 3.5; बौ० गृ० सूत्रे प्रथमपादस्य पाठः "ध्रुवोऽसि ध्रुवक्षितिः" इति वर्तते।

16- आग्नि० गृ० 1.5.4; 6.3

17- ऋ—1.14.10; 15.21; वा० गृ० सूत्रे "सर्वत." इत्यस्य स्थाने "विश्वतः" इति पाठभेदसहितः मन्त्रस्य पूर्वार्धं एव पठितः।

18- बौ० गृ० 1.5.14;

19- जै० गृ० 22.24

20- खा० गृ० 1.4.4

21- ऋ०—10.173.4; 6.88.1; 2.4.2.8

22- आ० गृ० 1.7.22

23- हि० गृ० 1.22.11-13

मा ह्रास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥ ऋ० 10.128.5, इति ।

## 6- आचमनम्, अग्निप्रदीपनम्, होमश्च

ततो वधूवरौ यज्ञकुण्डस्य पश्चिमाशायां पूर्वाभिमुखमुपविशतः । पश्चात् "ओम् अमृतोपस्तरणमसि स्वाहा" इत्यादिभिस्त्रिभिर्मन्त्रैस्त्रीण्याचमनानि कुरुतः । समिद्भिरग्निं प्रज्वाल्य, स्थालीपाकादीन् निर्माय, "ओम् अयन्त इध्म आत्मा०" इत्यादिभिश्चतुर्भिर्मन्त्रैः समिदाधानं कुरुतः । ततः "ओम् अग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैराघारावाज्यभागाहुतयश्चतस्रः "ओं भूरग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैर्व्याहृत्याहुतयश्च चतस्रस्ताभ्यां हूयन्ते ।

## 7- ओदनाहुतयः

अनन्तरं (स्थालीपाकं) सिद्धौदनमेकस्मिन् पात्रे कृत्वा, तदुपरि स्रुचा घृतं प्रसिच्य, तदेकीकृत्य, दक्षिणेन पाणिना स्वल्पं भक्तं गृहीत्वा, वधूवरौ निम्नमन्त्रैश्चतस्र आहुतीर्जुहुतः—

ओम् अग्नये स्वाहा ॥ इदमग्नये-इदन्न मम ॥ 1 ॥
ओम् प्रजापतये स्वाहा ॥ इदं प्रजापतये-इदन्न मम ॥ 2 ॥
ओं विश्वेभ्यो देवेभ्यः स्वाहा ॥ इदं विश्वेभ्यो देवेभ्यः-इदन्न मम ॥ 3 ॥
ओम् अनुमतये स्वाहा ॥ इदमनुमतये-इदन्न मम ॥ 4 ॥[24]

**मन्त्रार्थः**—अग्नये प्रकाशस्वरूपाय परमेश्वराय भौतिकाय वा स्वाहा इयम् ओदनाहुतिः सुहुतास्तु । प्रजापतये प्रजापालकाय राज्ञे स्वाहा इयं भक्ताहुतिः समर्पिता भवतु । विश्वेभ्यो देवेभ्यः सर्वेभ्यो विद्वद्भ्यः स्वाहा इमामाहुतिं जुहुवः । अनुमतये अनुकूला मतिर्यस्य तस्मै आचार्याय यद्वा याऽनुमन्यते तस्यै विदुष्यै, अनुमतिरनुमननात्, इति निरुक्तम्, 11.30; अनुमतिः अनुमन्ता परमेश्वरः इति दयानन्दः,[25] तस्मै वा स्वाहा सुहुतमस्तु ।

**अभिप्रायः**—भक्तभक्षणात् पूर्वं वधूवरौ विश्वेभ्यो देवेभ्यो भक्तं जुहुतः । यतो होमानन्तरमेव भक्षणं धर्म्यमुपयुक्तञ्चाहुः । तथा हि

---

24- पा० गृ० 1.12.3; द्र०— गो० गृ० 2.3.20; "तस्य देवता अग्निः प्रजापतिर्विश्वेदेवा अनुमतिरिति ।"

25- ऋ० भा० भू०, पृ० 202

मनुः—"अघं स केवलम्भुङ्क्ते यः पचत्यात्मकारणात्। यज्ञशिष्टाशनं ह्येव सतामन्नं विधीयते", 3.118। "केवलाघो भवति केवलादी" इति च श्रुतिः, ऋ० 10.117.6। आभिश्चतसृभिरोदनाहुतिभिर्गृहस्थधर्मः प्रोच्यते। वरवधूभ्यां यदपि वस्तुजातमुत्पाद्यते तस्य भोगस्ताभ्यां स्वार्थमात्राय नैव विधेयः, अपितु भोगात् प्रागग्नये आहुतिरूपेण, परमेश्वरमधिकृत्य प्राणिभ्यो भोजनरूपेण, राज्ञे कररूपेण, अखिलविद्वद्भ्यः प्राप्तेभ्योऽतिथिभ्यः सेवारूपेण, अनुमतये विदुषे आचार्याय विदुष्यै आचार्यायै च भोजनाच्छादनैः सत्कर्त्तव्यमिति भावः। यथोक्तं मनुना—"देवानृषीन् मनुष्यांश्च पितॄन् गृह्यांश्च देवताः। पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग्भवेत्॥ भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि। भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती॥ इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान्। प्रकृत्यान्नं यथाशक्ति भोजयेत् सह भार्यया॥" इति, मनु० 3.113, 116, 117।

## 8- इतरा आहुतय

ततः "ओं यदस्य कर्मणो०" इतिमन्त्रेण स्विष्टकृदाहुतिं दत्त्वा, "ओं भूरग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैर्व्याहृत्याहुतीश्चतस्रः "ओं त्वं नो अग्ने वरुणस्य विद्वान्०" इत्यादिभिरष्टाभिर्मन्त्रैरष्टाज्याहुतीश्च जुहुतः।

## 9- ओदनभक्षणम्

पश्चादवशिष्टमोदनं पात्रे कृत्वा, तदुपरि घृतं प्रसिच्य, दक्षिणेन हस्तेन तत् स्पृष्ट्वा वरो निम्नमन्त्रत्रयं मनसा जपति, ततश्च स ओदनं भुङ्क्ते, उच्छिष्टं च वध्वै भोक्तुं प्रयच्छति।[26]

ओम् अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना।
बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते॥ 1॥
ओं यदेतद्धृदयं तव तदस्तु हृदयं मम।
यदिदं हृदयं मम तदस्तु हृदयं तव॥ 2॥
ओम् अन्नं प्राणस्य षड्विंशस्तेन बध्नामि त्वा असौ॥ 3॥[27]

**मन्त्रार्थः**—पाशयति शरीराङ्गानि परस्परं बध्नातीति पाशः, अन्नं चासौ पाशः इति अन्नपाशः देहाङ्गस्थिरताहेतुकमन्नम् तेन

---

26- तु०—गो० गृ० 2.3.22; क्षा० गृ० 1.4.11

27- गो० गृ० 2.3.21; खा० गृ० 1.4 10; मं० ब्रा० 1.3,8-10

मणिना मणिवद् बहूपकारकेण, प्राणसूत्रेण प्राणाः सूत्रस्थानीयाः यस्य तेन पृश्निना अन्तरिक्षेण, सत्यग्रन्थिना सत्यमेव ग्रन्थिः सत्यग्रन्थिः तेन च हे वधु, ते तव मनः संकल्पविकल्पात्मकवृत्तिकमन्तरिन्द्रियं, हृदयम् अन्तःकरणं, चकारात् चित्तादिकञ्च बध्नामि ग्रथ्नामि। अन्नस्य प्राणैः सम्बन्धः, प्राणानां चान्नेन, यथोक्तम्—"अन्नं हि प्राणः, श० 6.6.4.5" इति। अन्नस्य प्राणानां चान्तरिक्षेण सम्बन्धः, अन्तरिक्षादागतेन वृष्टिजलेनैवान्नस्योत्पादनात्, अन्नभक्षणेन च प्राणानामवस्थितेः। एवम् अन्नेन, प्राणेन, अन्तरिक्षजलेन, सत्यरूपेण ग्रन्थिना च हे वधु, तव मनो हृदयं च स्वकोयेन मनसा हृदयेन च बध्नामीति भावः। तथैव वधूरपि भावयेत्, वधूरहं तव पत्युः मनो हृदयं च स्वकीयेन मनसा हृदयेन च बध्नामीति।[28]

हे वधु, यद् एतत् तव त्वदीयं हृदयम् आत्मा, प्राणः, अन्तःकरणं वा वर्त्तते, तद् हृदयं मम मदीयं हृदयम् इव अस्तु भवतु, यद् इदं मम मे हृदयम् आत्मा, प्राणः, अन्तःकरणं वाऽस्ति, तद् हृदयं तव ते हृदयम् इव अस्तु भवतु, आवयोरात्मा प्राणोऽन्तःकरणं चैकीभावं प्राप्नोत्वित्यर्थः। तथैव वधूरपि भावयेत्—हे स्वामिन् इत्यादि।

हे वधु, अन्नम् इदमदनीयमोदनं प्राणस्य शरीरान्तःसञ्चारिणो वायोः जीवनस्येत्यर्थः पोषकरूपेण षड्विंशः षड्विंशतितमं तत्त्वमस्ति, तेन अन्नभूतेन द्रव्येण प्राणस्याधारेण त्वा त्वाम् अहं बध्नामि संयमयामि। वधूरपि तथा सङ्कल्पते।

**अभिप्रायः**—भक्तभक्षणकाले एते मन्त्राः मनसा जप्यन्ते। एषु मन्त्रेषु वरवध्वोः पारस्परिकस्नेहस्य प्रकाशः साधनानि च ज्ञापितानि। यथान्नेनैव प्राणास्तिष्ठन्ति प्राणवायुश्चान्नवर्द्धको वर्त्तते यथैवावां परस्परस्य रक्षकौ भवेव। दाम्पत्यजीवने सत्यव्यवहार एव सुखमुत्पादयति, अतो गृहस्थजीवने सत्यग्रन्थिनाऽऽवां परस्परं सुबद्धौ भवेव।

---

28- संस्कारविधौ टिप्पण्यामस्य मन्त्रस्य महर्षिकृतम् आर्यभाषाव्याख्यानं त्विदम् - हे वधू वा वर, जैसे अन्न के साथ प्राण, प्राण के साथ अन्न, तथा अन्न और प्राण का अन्तरिक्ष के साथ सम्बन्ध है, वैसे (ते) तेरे (हृदयम्) हृदय (च) और (मनः) मन (च) और चित्त आदि को (सत्यग्रन्थिना) सत्यता की गांठ से (बध्नामि) बांधती वा बान्धता हूं।

आवयोर्हृदयैक्यमपि सुखस्य मूलहेतुर्वर्त्तते। यथोक्तम् श्रुतौ—"समानी व आकूतिः समाना हृदयानि वः। समानमस्तु वो मनो यथा वः सुसहासति," इति ऋ० 10.191.4। आवां परस्परस्य व्यवहारेऽन्योऽन्यमात्मवत् पश्येव। आत्मने यो व्यवहारः प्रतिकूलस्तादृशमन्यस्मै नैव कुर्याव। यथोक्तम्—"आत्मनः प्रतिकूलानि परेषां न समाचरेत्" इति। अन्नमपि स्नेहोत्पादकमपूर्वं साधनं विद्यते। अन्नदानेन पशुपक्षिणोऽपि मित्राणि जायन्ते। अतोऽन्नादिनाऽन्योऽन्यस्य शरीररक्षामप्यावां विधास्यावः। यथा तण्डुलानि पाकं प्राप्य भक्तरूपेण संश्लिष्टानि भवन्ति तथैवाऽऽवामपि ओदनवत् दाम्पत्यव्यवहारे संश्लिष्टौ भवेवेत्यर्थः।

तुलना—का० गृ० सूत्रे[29] दम्पत्याऽवशिष्टौदनस्य समशनसमये निम्नमन्त्रस्यापि विनियोगः कृतः—"अन्नमेव विवननमन्नं संवननं स्मृतम्। अन्नं पशूनां प्राणोऽन्नं ज्येष्ठं भिषक् स्मृतम्" इति। प्रथममन्त्रः खिलऋग्वेदे[30] पठितः। तत्र "अन्नपाशेन" इत्यस्य स्थाने "अन्नमयेन" इति पाठभेदः, "मनः" "हृदयम्" इति शब्दयोश्च परस्परस्थानविपर्यासो वर्त्तते। का० गृ० सूत्रे[31] 'बध्नामि" इत्यस्य स्थाने "सिनोमि" इति पठितम्। द्वितीयमन्त्रोऽपि खिलऋग्वेदे[32] लभ्यते। परं तत्र "यदेतद्धृदयं तव" इत्यस्य स्थाने "आ हरयेत् ते हृदयम्" इति "यदिदं हृदयं मम" इत्यस्य स्थाने च "अथो यन्मम हृदयम्" इति पाठभेदो दृश्यते। कौशिकसूत्रे[33] उपर्युक्ततृतीयमन्त्रस्य सदृशार्थको मन्त्रार्धं उपलभ्यते "अन्नं प्राणस्य बन्धनं तेन बध्नामि त्वा मयि" इति।

## 10- यज्ञस्योपसंहारः

ततो वधूवरौ यज्ञमण्डपस्थशुभासने पूर्वाभिमुखमुपविशतः, सामवेदोक्तमन्त्रैः महावामदेव्यगानञ्च कुरुतः। तदनन्तरम् ईश्वरस्तुतिप्रार्थनोपासना, स्वस्तिवाचनं, शान्तिकरणं कर्म च कृत्वा क्षारलवणरहितं मिष्टदुग्धघृतादिसहितञ्च भोजनं भुञ्जाते।[34] तदनन्तरं

---

29- का० गृ० 29.1
30- 3.15.7
31- का० गृ० 29.1
32- 3.15.4
33- कौ० 89.10
34- तु०—गो० गृ० 2.3.15; पा० गृ० 1.8.21; खा० गृ० 1.4.9

विवाहसम्पादकं पुरोहितं, धर्मात्मनः, कार्यार्थमागतान् जनांश्चोत्तम-भोजनादिना सम्मानयेत्। ततश्च पुरुषाः पुरुषान् स्त्रियश्च स्त्रीः सत्कृत्य विसर्जयेयुः।

तुलना—पारस्करगृह्यसूत्रं विवाहान्ते आचार्याय दक्षिणादानं दक्षिणाप्रकारञ्च प्रतिपादयति।[35] वा० गृ० सूत्रम्[36] ओदनस्थाने दधिप्राशनं हविष्यभक्षणं वा कुर्यादिति वर्णयति। समशनकाले च "समानावाकूतानि०" इति मन्त्रं विनियोजयति।

## 11- त्रिरात्रब्रह्मचर्यम्

इत्थं विवाहविधिः समाप्यते। ततो वरवध्वौ त्रिरात्रं भूमौ पृथक् पृथक् शय्यां कृत्वा ब्रह्मचर्यव्रतसहितं शयाते। तादृशं च सात्त्विकं भोजनं कुरुतः येन स्वप्नेऽपि वीर्यस्खलनं न भवेत्। चतुर्थदिवसे च विधिपूर्वकं गर्भाधानं कुरुतः। यदि चतुर्थे दिवसे कापि बाधा समुत्पद्येत तर्ह्यधिकदिनानि ब्रह्मचर्यव्रतं सम्पाप्य यदा तयोरभिलाषो गर्भाधान-कालश्च भवति तदा रात्रौ यथाविधि गर्भमादधाते।

अभिप्रायः—दाम्पत्यजीवनात् प्राग् वधूवरौ ब्रह्मचर्यबन्धने आस्ताम्। विवाहद्वारा सन्तानोत्पत्त्यर्थं सांसाररिकसुखभोगार्थं च तौ गार्हस्थ्यजीवनं प्रविशतः। तत्रातिविषयलोलुपता तयोर्मा भूदिति हेतो-स्ताभ्यां गार्हस्थ्यजीवनेऽपि ब्रह्मचर्यव्रतधारणस्योपदेशो दीयते। विवाहा-नन्तरं विवेकमतिहाय कामान्धाभ्यां ताभ्यां नैव भवितव्यमिति त्रिरात्र-ब्रह्मचर्यव्रतपालनविधिना तौ ज्ञाप्येते। सम्पूर्णगार्हस्थ्यजीवने च ब्रह्मचर्य-व्रतपूर्वकमुषित्वाऽऽवश्यकतानुकूलं चतुर्थीकर्म विधेयमिति ध्वन्यते।

एवमिह विवाहसंस्कारस्योत्तरविधयो व्याख्याताः।

o:—:o

---

35- पा० गृ० 1.8.14-18; तु० गो० गृ० 2.3.23; खा० गृ० 1.4.6
36- वा० गृ० 16.7-9

# सप्तमोऽध्यायः

पूर्वाध्यायेषु कन्यागृहे सम्पादनीया विधयो व्याख्याताः। अत्र पितृगृहात् पतिगृहगमनमार्गे वरगृहे च करणीयानां विधीनामध्ययनं विधास्यते।

## 1- अश्रुप्रमार्जनम्

वरपक्षीयजना वधूवरौ स्यन्दने उपवेश्य सम्मानपूर्वकं वरगृहमानयन्ति। यदि वधूः पितृकुलं त्यजन्ती नेत्रयोरश्रूण्यानयति तदानीं वरो निम्नमन्त्रं पठति[1]—

जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः।
वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥[2]

मन्त्रार्थः—ये खलु जीवं जीवनमुद्दिश्य, रुदन्ति नेत्राभ्यामश्रूणि विमुञ्चन्ति, ते अध्वरे गृहस्थयज्ञे, वि विपरीतं, मयन्ते शब्दायन्ते, अनुचितं ते क्रन्दन्तीत्यर्थः। "विनयन्त्यध्वरम्" इत्यथर्ववेदीयपाठे, ते अध्वरम् अहिंसनीयगार्हस्थ्ययज्ञं विपरीतं नयन्ति, निन्द्यं कुर्वन्तीत्यर्थः, वधूक्रन्दनैर्व्याप्तं गार्हस्थ्ययज्ञं न शोभनमपितु निन्दनीयं भवतीति तात्पर्यम्। नरः पुरुषाः स्त्रियश्च, एकवद्भावः, दीर्घां सुदीर्घां प्रसितिं गार्हस्थ्यबन्धनपद्धतिम् अनुदीधियुः अनुचिन्तयन्ति, सुदीर्घे गृहस्थजीवने कदाचिद् विरहः कदाचित् संयोगश्च भवत्येवेति मत्वा मनसः समावस्थां धारयन्तीत्यर्थः। ये पुरुषाः स्त्रियश्च इदं दीधियुः चिन्तयन्ति ते पितृभ्यः मातापित्रादिपारिवारिकजनेभ्यः वामं वननीयं सुखं समेरिरे प्रयच्छन्ति, जनयः जायाश्च परिष्वजे परिष्वजनाय आलिङ्गनाय पतिभ्यः भर्तृभ्यः मयः सुखं प्रददति। मन्त्रपूर्वार्द्धप्रतिपादितरहस्यविदः खलु जायापती गृहस्थाश्रमे सदैव प्रमोदमनुभवतः इत्यर्थः। अतः पतिगृहं गच्छन्ती रोदनं मा कार्षीरिति फलितोऽर्थः।

---

1- तु० आ० गृ० 1.8.4; शां० गृ० 1.15.2; आप० गृ० 2.4.6; बौ० गृ० 1.6.26; कौ० सू० 79.30

2- ऋ० 10.40.10; अ० 14.1.46, इत्यत्र "मयन्ते" इत्यस्य स्थाने "नयन्ति" इति पाठः।

**अभिप्रायः**— अयं विधिः वधूसान्त्वनार्थं विद्यते। विवाहसंस्कारानन्तरं यदा वधूः पितृकुलं परित्यज्य पतिकुलं प्रति याति तदा स्वाभाविकतया तस्या नेत्रयोरश्रूणि जायन्ते। तदा वेदमन्त्रद्वारा वरस्तामुपदिशति—हे वधु, त्वमत्रानुचितं मा क्रन्दस्व। गृहस्थजीवने रोदनमशुभकरम्। ये खलु जीवने रुदन्ति ते निन्द्या भवन्ति। अतस्त्वं पितरं भर्त्तारञ्च सुखयितुं प्रमुदिता पतिगृहं प्राप्नुहि। गृस्थजीवने वध्वा नेत्रयोरश्रूणि नानेतव्यानीत्यनेन ज्ञाप्यते।

**तुलना**—शां० गृ० सूत्रं वध्वा पितृगहान्निर्गमनसमये "प्र त्वा मुञ्चामि" इत्येतस्य मन्त्रस्योच्चारणं प्रतिपादयति। ततः प्ररुदन्त्यां वध्वां प्रस्तुतमन्त्रो विनियुक्तः। आप० गृ० सूत्रानुसारं पाणिग्रहणात् पूर्वं वधूस्तत्सम्बन्धी वा रुद्याच्चेत्तदानीमयं मन्त्र उच्चार्यते न तु प्रस्थानकाले।[3]

## 2- रथारोहणं प्रयाणञ्च

रथोपवेशनसमये वरो वधूं स्वदक्षिणभागे उपवेशयति। ततश्च स निम्नमन्त्रौ पठित्वा रथं चालयति—

पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा प्रवहतां रथेन।
गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदासि॥[4]

**मन्त्रार्थः**—हे वधु, पूषा पोषकः पतिः, हस्तगृह्य तवहस्तं गृहीत्वा, त्वा त्वाम् इतः अस्मात् पितृकुलात् नयतु स्वगृहं प्रापयतु। अश्विना अश्विनौ देवौ वरस्य पितरौ, त्वा त्वां रथेन स्यन्दनेन प्रवहतां प्रनयताम्। त्वं गृहान् भर्तृ गृहं गच्छ प्राप्ता भव, यथा येन त्वं गृहपत्नी गृहस्वामिनी वशिनी सर्वेषां गृहगतानां भृत्यबन्धुबान्धवादीनां स्वगुणैर्वशयित्री च असः भवेः, विदथं ज्ञानयुक्तं वचनं च आवदासि आवदेः।

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम्।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व॥[5]

---

3- आप० गृ० 2.4.6, "जीवम्" इत्यस्य स्थाने "जीवाम्" इति पाठभेदः।

4- ऋ० 10.85.26; अ० 14.1.20 इत्यत्र "पूषा" इत्यस्य स्थाने "भगः" इति पाठभेदः, आ० गृ० 1.8.1

5- ऋ० 10.85.20; अ० 14.1.61 पाठभेदसहितम्, गो० गृ० 2.4.1; मं० ब्रा० 1.3.11; आप० गृ० 2.5.22; मा० गृ० 1.13.6; जै० गृ० 22.16; तु०—का० गृ० 26.4; वा० गृ० 25.2; शां० गृ० 15.13

**मन्त्रार्थः**—(रथपक्षे)—हे सूर्ये उषर्वज्ज्योतिर्मयिनवोढे, त्वं सुकिंशुकं शल्मलिं सुपुष्पितं शल्मलिवृक्षमिव स्वलङ्कृतम्, अत्र निरुक्तम्—"सुकाशनं शन्नमलम्। अपि वोपमार्थे स्यात् सुकिंशुकमिव शल्मलिमिति।" निरु० 12.8, विश्वरूपं नानारूपं, हिरण्यवर्णं सुवर्णवर्णं हिरण्यालंकारैः सुशोभितं वा, सुवृतं सुष्ठु आवर्तनं गमनं यस्य, सुचक्रं सुन्दरचक्रयुक्तम्, अमृतस्य लोकं मरणादिभयराहित्यस्य दर्शकं, लोकृ दर्शने, स्योनं सुखकरं वहतुं रथम् आरोह आरूढा भव। तथा च पत्ये भर्त्रे वहतुम् आत्मनो विवाहं स्योनं सुखकरं कृणुष्व कुरु।

(गृहस्थपक्षे)—हे सूर्ये उषर्वज्ज्योतिष्मति वधु, त्वं सुकिंशुकं सुप्रकाशयुतं, पञ्चयज्ञाग्निभिः प्रकाशमानमित्यर्थः, "सुकिंशुकं सुकाशनम्" इति निरुक्तम्, 12.8, अत एव शल्मलिं नष्टमलं दैहिकदोषरहितं दुर्गुणादिमलरहितं वा "शल्मलिं शन्नमलम्" इति निरुक्तम्, 12.8, विश्वरूपं विविधभोगैरनेकरूपं, हिरण्यवर्णं सुवर्णप्रकाशेन देदीप्यमानम् ऐश्वर्यमयं, सुवृतं सम्यग् वर्त्तनं चलनं यस्य तादृशं, गतिरोधरहितमित्यर्थः, सुचक्रं सुष्ठुचालनसाधनोपेतं, यद्वा चक्रं समूहः, शोभनगुणोपेतगृहस्थसदस्यसमूहेन व्याप्तम्, अमृतस्य लोकम् आनन्दस्य गृहं, स्योनं सुखकारकं, वहतुं विवाहं गार्हस्थ्यमित्यर्थः, आरोह आरूढा भव।

**अभिप्रायः**—रथारोहणसमये वरेण वध्वै विशिष्टमुपदिश्यते। "पूषा त्वेतो नयतु हस्तगृह्य" इत्यनेन स वधूं प्रति स्वस्य पोषकत्वं दर्शयति, पत्न्याः पोषणभारञ्च स्वस्कन्धे धारयति। "अश्विना त्वा प्रवहतां रथेन" इत्यनेन च स्वमातापित्रोरपि तां प्रत्युत्तरदायित्वं सहानुभूतिञ्च ज्ञापयति। "गृहपत्नी यथासः" इत्यनेन स तस्याः गृहपालनाधिकारं, "वशिनी" इत्यनेन वशयितृभावं, "विदथमा वदासि०" इत्यनेन च ज्ञानोपदेष्टृत्वं दर्शयति। रथमारोहन्तीं वधूं वरः प्रेरयति यत् सा विविधभोगयुतमानन्दस्य सन्दोहं गृहस्थरथमप्यारोहत्विति। वध्वा पञ्चयज्ञाग्नियुतया, शारीरिकमानसिकमलरहितया, विविधगुणोपेतया, हिरण्यवदुज्ज्वलया, सुन्दरगतिमत्या, शोभनाङ्गया, सुखकर्त्र्या च भवितव्यमिति द्वितीयमन्त्रेण ध्वन्यते। किंशुको यथा यज्ञियो भवति, शल्मलीवृक्षश्च बहुवीर्यः, रम्यः, दीर्घः, स्थूलफलः, दीर्घायुः, मधुरः शीतलः मलघ्नश्च[6] तथा गृहस्थेनापि भवितव्यमित्यपि द्योत्यते।

6- द्र०—शब्दकल्पद्रुमः

तुलना—आप० गृ० सूत्रे रथस्योत्तम्भनं, रथे वाह्योर्बन्धनं, रथवर्त्मनोश्च नीललोहितसूत्रयोर्बन्धनमित्यादिकमितरदपि प्रतिपादितम्।[7] वा० गृ० सूत्रमपि रथचक्राभिमन्त्रणादिकं वर्णयति।[8] आ० गृ० सूत्रं "पूषा त्वेतो नयतु" इत्येकमेव मन्त्रं यानारोहणकाले विनियोजयति, शां० गृ० सूत्रं, गो० गृ० सूत्रञ्च "सुकिंशुकम्" इत्येकं मन्त्रम्।[9] का० गृ० सूत्रं रथारोहणसमये द्वावितरमन्त्रावपि विनियोजयति[10]—

उदुत्तममा रोहन्ती व्यस्यन्ती पृतन्यतः।
मूर्धानं पत्युरारोह प्रजया च विराड् भव ॥ 1 ॥
स्नुषाणां श्वसुराणां च प्रजायाश्च धनस्य च।
पतीनां देवराणां च सजातानां विराड् भव ॥ 2 ॥

मा०गृ० सूत्रं निम्नमन्त्रद्वारा रथसनस्याभिमन्त्रणमपि वर्णयति[11]—"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः सनद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि॥"[12] मा० गृ०, वा० गृ० सूत्रे च यदा रथोऽभीष्टदिशि प्रचलति तदाऽनयोर्मन्त्रयोः पठनं प्रतिपादितम्—"अनु मा यन्तु देवता अनु ब्रह्म सुवीर्यम्। अनु क्षत्रं च यद्यशमनु मामेतु यद्यशम्॥ प्रति मा यन्तु देवताः प्रति ब्रह्म सुवीर्यम्। प्रति क्षत्रं च यद् बलं प्रति मामेतु यद् बलम्॥[13] आप० गृ० सूत्रे वरगृहप्रयाणार्थं गन्तव्यदिशि रथस्थापनक्रियायां निम्नमन्त्रो विनियुक्तः[14]—'सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः। ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः॥"[15] आप० गृ० सूत्रे, मा० गृ० सूत्रे च यदा वाहौ स्यन्दने युज्येते तदा निम्नमन्त्रयोरुच्चारणं प्रतिपादितम्[16]—"युञ्जन्ति ब्रध्नमरुषं चरन्ति परि तस्थुषः। रोचन्ते रोचना

---

7- आप० गृ० 2.5.21-22, 24-25
8- वा० गृ० 17.1-5
9- ऋ०—1.8.1; 15.13; 2.4.1
10- का० गृ० 25.47
11- मा० गृ० 1.13.5
12- ऋ० 6.47.26; यजु० 29.52; अ० 6.125.1
13- ऋ० 1.13.7-9; 17.8-9; वा० गृ० सूत्रे सामान्यपाठभेदो लभ्यते।
14- आप० गृ० 2.5.19
15- ऋ० 10.85.1; अ० 14.1.1
16- ऋ—2.5.20; 1.13.2

दिवि ।। योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इन्द्रमूतये ।।"[17]

शां० गृ० सूत्रे स्यन्दने वाहयोजनकाले निम्नमन्त्रौ विनियुक्तौ[18]— युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो । तेन जायामुप प्रियां मन्दानो याह्यन्धसो योजा न्विन्द्र ते हरी ।। युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः । उत त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः ।।[19] प्रस्तुतगृह्यसूत्रे[20] रथाक्षानुलेपनक्रियायां निम्नमन्त्रो विनियुक्तः— अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ।।[21] रथचक्रानुलेपनस्यापि विधानमस्मिन् गृह्यसूत्रे[22] कृतम् । तदर्थं निम्नौ मन्त्रौ विनियुक्तौ—"शुची ते चक्रे यात्या व्यानो अक्ष आहतः । अनो मनस्मयं सूर्याऽऽरोहत् प्रयती पतिम् ।। सूर्याया वहतुः प्रागात् सविता यमवासृजत् । अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ।।[23] मा० गृ० सूत्रे निम्नमन्त्रपाठपुरस्सरं रथचक्रयोरभिमन्त्रणं लभ्यते[24]—'अङ्कौ न्यङ्कावभितो रथं ये ध्वान्ता वाताग्निमभि सं चरन्ति । दूरे हेतिः पतत्री वाजिनीवांस्ते नोऽग्नयः पप्रयः पालयन्तु ।।[25]

## 3- नावारोहणं ततोऽवतरणञ्च

वध्वाः पितृकुलात् पतिकुलं प्रत्यानयनकाले नावारोहणमावश्यकं भवेच्चेन्निम्नार्द्धर्चमुच्चार्य नावमारोहेत्—

अश्मन्वती रीयते सं रभध्वमुत्तिष्ठत प्रतरता सखायः ।

नावोऽवरोहणसमये च तदुत्तरार्द्धर्चं पठेत्—

अत्रा जहाम ये असन्नशेवाः शिवान् वयमुत्तरेमाभि वाजान् ।।[26]

---

17- प्रथममन्त्रः ऋ० 1.6.1; यजु० 23.5; अ० 20.26 4; 47.10; 69.9 इत्यत्र, द्वितीयश्च ऋ० 1.30.7; यजु० 11.14; अ० 19.24.7; 20.26.1 इत्यत्र प्राप्यते ।

18- शां० गृ० 1.15.8

19- ऋ० 1.82.5-6

20- शां० गृ० 1.15.3

21- ऋ० 1.82.2; यजु० 3.15; तु० अ० 18.4.61

22- शां० गृ० 1.15.4

23- ऋ० 10.85.12-13; तु० अ० 14 1.12-13

24- मा० गृ० 1.23.4; तु०—का० गृ० 26.2; वा० गृ० 15.1

25- अयं मन्त्रः तै० संहितायां पाठभेदसहितो लभ्यते, 1.7.7.2

26- तु०— ऋ० 10.53.8; यजु० 35.10; अ० 12.2.26

**मन्त्रार्थः**—हे सखायः बान्धवजनाः, अश्मन्वती दृषद्भिराकीर्णा इयं सम्मुखीना सरित् रीयते तीव्रं प्रवहति, तामुत्तर्तुं यूयं संरभध्वं संमिल्य प्रयत्नं कुरुत। उत्तिष्ठत उद्गच्छत, प्रतरत इमां नदीमुल्लङ्घ्यत, अस्याः पारं गच्छतेत्यर्थः। (संसारसरित्पक्षे)—अश्मन्वती दुःखरूपैरश्मभिः परिपूर्णा इयं विपत्तिनदी, संसाररूपिणी वा नदी रीयते वेगेन प्रवहति। अतो हे सखायः विद्वांसो गृहस्थवान्धवाः संरभध्वम् अस्याः विपन्नद्याः संसारनद्या वा पारं गन्तुं प्रयतध्वम्, उत्तिष्ठत सत्कर्माण्याश्रित्य उद्गच्छत, प्रतरत पारं गच्छत च।

ये अशेवाः "शेवमिति सुखनाम" निघं० 3.6, तद्विपरीतम् अशेवाः दुःखानि दुःखसाधनानि वा, असन् सन्ति, तानि वयम् अत्रा अत्र अस्मिन्नेव तटे गार्हस्थ्यसेवनात् प्राग्भवे काले जहाम परित्यजेम। शिवान् वाजान् मङ्गलकराण्यैश्वर्याणि अभि अभिप्राप्तुम् उत्तरेम नद्याः पारं गच्छेम।

**अभिप्रायः**—अनेन विधिना वधूवरौ विज्ञाप्येते यद् गृहस्थाश्रमे निवसतोस्तयोः विपन्नदीतरणं संसारनदीतरणं वा प्रमुखोद्देश्यम्। एतदर्थं तौ पापकर्माणि परित्यज्य शिवानि कल्याणकराण्येव कर्माण्याचरेताम्। यथा नदीतरणसमये भारो निमज्जनकारणं नौश्च तरणकारणं तथैव संसारसरित्तरणे अशिवानि अकल्याणकराणि पापकर्माणि निमज्जनकारणानि भवन्ति शिवानि पुण्यान्येव च कर्माणि तरणसाधनानि जायन्ते। "अश्मन्वती" इति विशेषणेन संसारसरित्तरणस्य काठिन्यं सूच्यते। "संरभध्वम्" इत्यादिभिः पदैश्च तरणोपायः ज्ञाप्यते। संसारनदीतरणाय वरवधूभ्यां संगठिताभ्यां पापरूपभाररहिताभ्यां पुण्यकर्मसहिताभ्यां च भवितव्यमिति संदिश्यते।

**तुलना**—उपर्युक्तविधिराश्वलायनगृह्यसूत्रे तथैव प्राप्यते।[27] गो० गृ० सूत्रानुसारं वरगृहप्रयाणमध्ये यदि नदी समागच्छेत् तदा "मा विदन् परिपन्थिनः" इत्यस्य मन्त्रस्योच्चारणं प्रतिपादितम्।[28] शां० गृ० सूत्रे नावमारोहन्त्यां वध्वां "सूत्रामाणम्" इति मन्त्रस्य, तरन्त्याम् "अश्मन्वती" इति मन्त्रस्य, अगाधजलप्राप्तायाञ्च "उद्व ऊर्मिः" इति मन्त्रस्योच्चारणमगाधजलप्रेक्षणञ्च वर्णितम्। आ० गृ० सूत्रं नावा नदीतरणसमये

27- आ० गृ० 1.8.2-3
28- गो० गृ० 2.4.2

वधूः कैवर्तान्न पश्येदित्यपि वर्णयति।[29] का० गृ० सूत्रे, शां० गृ० सूत्रे, कौ० सूत्रे च "अश्मन्वती" इति सम्पूर्णमन्त्रस्य विनियोगो नदीतरणकाले कृतः।[30] मा० गृ० सूत्रे, शां० गृ० सूत्रे कौ० सूत्रे च नावारोहणसमये निम्नमन्त्रो विनियुक्तः[31]—"सूत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम्। दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये॥[32] पा० गृ० सूत्रं "सूत्रामाणम्" इति मन्त्रं नावोऽवरोहणसमये विनियोजयति।[33] आप० गृ०, बौ० गृ० सूत्रानुसारं नदीतरणविषये द्वौ मन्त्रौ विनियुक्तौ। प्रथममन्त्रेण नावोऽभिमन्त्रणं क्रियते, नदीं तीर्त्वा च द्वितीयो मन्त्र उच्चार्यते[34]—"अयं नो मह्याः पारं स्वस्ति नेषद्वनस्पतिः। सीरा नः सुतरा भव दीर्घायुत्वाय वर्चसे॥ अस्य पारे निर्ऋथस्य जीवा ज्योतिरशीमहि। मह्या इन्द्र स्वस्तये॥ इति॥

## 4-भयान्वितस्थानेषु पठनीयो मन्त्रः

वैवाहिकप्रयाणे यदि मार्गे चतुष्पथसंयोगः, नदीव्याघ्रचौरादिभयं, भीतिकरं स्थलं, उच्चावचा गर्त्तयुता विषमा भूमिः, दीर्घवृक्षसमूहः, श्मशानस्थलं वा समागच्छति तर्हि निम्नमन्त्रं वरः पठति—

मा विदन् परिपन्थिनो य आसीदन्ति दम्पती।
सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः॥[35]

**मन्त्रार्थः**—ये केऽपि, परिपन्थिनः बाधकाः शत्रवः, जायापती आसीदन्ति सामान्यतः प्राप्नुवन्ति, ते मा विदन् इमौ दम्पती न प्राप्नुवन्तु। इमौ दुर्गं दुःखेन गम्यं मार्गं, सुगेभिः सुगमनैः सुखगमनसाधनैर्वा अति इताम् अतिक्रम्य गच्छताम्। अरातयः दानरहिताः परिपन्थिनः अपद्रान्तु भयभीताः सन्तः अपगच्छतु।

---

29- आ० गृ० 2.6.2
30- ऋ०—26.12; 15 18; 71.24
31- ऋ०—1.31.16; 11.9.10; 15.17; 71.23, 86.26
32- ऋ० 10,63.10; यजु० 21.6; तु—अ० 7.6.3
33- पा० गृ० 3.15.11
34- ऋ०—2.6.1,3; 4.3.6
35- ऋ० 10.85.32; तु—अ० 14.2.11; मं० ब्रा० 1.3.12; बृ० दे० 7.133

**अभिप्रायः**—वैवाहिकप्रयाणकाले गृहस्थजीवने वा यदि नाम किमपि कष्टं कोऽपि शत्रुः कापि विपत्तिर्वा दम्पत्योरभिमुखमुपतिष्ठेत तदानीं ताभ्यां तद् धैर्येणापाकर्त्तव्यमित्याशयः।

तुलना—अयं विधिर्गोभिलगृह्यसूत्रे तथैव परिलक्ष्यते।[36] आ० गृ० सूत्रमत्रैवं सूत्रयति—"कल्याणेषु देशवृक्षचतुष्पथेषु मा विदन् परिपन्थिन इति जपेत्।"[37] शां० गृ० सूत्रं भिन्नभिन्नस्थले भिन्नभिन्नमन्त्रजापं प्रतिपादयति। तत्रोक्तम्—"मा विदन् परिपन्थिन" इति चतुष्पथे। "ये वध्व" इति श्मशाने॥ "वनस्पतये शतवत्स" इति वनस्पतावर्द्धर्चं जपति॥[38] वा० गृ० सूत्रेऽपि प्रयाणकाले भिन्नस्थानेषु भिन्नमन्त्राणां पाठः कृतः।[39] आप० गृ० सूत्रे "मा विदन्" इति मन्त्रो नवदम्पत्यो रथारोहणसमये विनियुक्तः।[40] का० गृ० सूत्रेऽयं रथचलनसमये विनियुज्यते।[41] आप० गृ० सूत्रेऽन्यदपि सूत्रितम्—"तीर्थस्थाणुचतुष्पथव्यतिक्रमे चोत्तरां जपेत्॥ क्षीरिणामन्येषां वा लक्षण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रम उत्तरे यथालिङ्गं जपेत्" इति।[42]

मा० गृ० सूत्रे प्रतिपादितं यद् अध्वनि यदा ग्रामः, एकवृक्षः, श्मशानभूमिः, चतुष्पथम्, तीर्थं वा समागच्छेत्तदा निम्नपञ्चमन्त्राणामेकैकः क्रमशः सप्रसङ्गं पठितव्यः।[43] "नमो रुद्राय ग्रामसदे॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥1॥ नमो रुद्रायैकवृक्षसदे॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥2॥ नमो रुद्राय श्मशानसदे॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥3॥ नमो रुद्राय चतुष्पथसदे॥ ये पथां पथिरक्षय ऐडमृडा यव्युधः। तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥4॥ नमो रुद्राय तीर्थ-

---

36- गो० गृ० 2.4.2
37- आ० गृ० 1.8.6
38- शां० गृ० 1.15.14-16
39- वा० गृ० 17.8-17
40- आप० गृ० 2.5.23
41- का० गृ० 26.8
42- आप० गृ० 2.5.26; 2.6.5
43- मा० गृ० 1.13.10-14; तु०—वा० गृ० 15.5-9

सदे ॥ ये तीर्थानि प्रचरन्ति सृगवन्तो निषङ्गिणः । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥5॥" इति ।[44]

मा० गृ० सूत्रानुसारं वैवाहिकप्रयाणे जलाशयतरणमावश्यकञ्चेन्निम्नलिखितैस्त्रिभिर्मन्त्रैस्त्रयो जलाञ्जलयः प्राक् समर्प्यन्ते—"समुद्राय वैणवे सिन्धूनां पतये नमः ॥1॥ नमो नदीनां सर्वासां पत्ये ॥2॥ विश्वाहा जुषतां विश्वकर्मणामिदं हविः स्वः स्वाहा ॥3॥ इति ।[45] तरणसमये च निम्नमन्त्रेण त्रीण्याचमनानि क्रियन्ते—"अमृतं वा आस्ये जुहोम्यायुः प्राणोऽप्यमृतं ब्रह्मणा सह मृत्युं तरति । प्रासहादिति रिष्टिरिति भुक्तिरिति मुक्षीयमाणः सर्वं भयं नुदस्व स्वाहा ॥"[46]

का० गृ० सूत्रे श्मशानभूमिपार्श्वतो गमनकाले निम्नमन्त्रो विनियुक्तः—"ये श्मशानेषु पुण्यजनाः शावास्तेषु शेरते । तत्रैव ते रमन्तां मा वधूरन्ववेक्षत ॥"[47] अत्र तीर्थान्तिकाद्गमनकाले निम्नमन्त्रस्याप्युच्चारणं प्रतिपादितम्—"ता मन्दसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे । कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् ॥"[48] बौ० गृ० सूत्रे, आप० गृ० सूत्रे च तीर्थातिरिक्तं स्तम्भानां चतुष्पथानां च समीपाद् गमनकालेऽप्युपर्युक्तमन्त्रो विनियुक्तः ।[49]

## 5- रथे भग्ने, आकस्मिकविपत्तौ वा करणीयो विधिः

वरगृहप्रयाणसमये रथारूढयोर्वरवध्वो रथस्यावयवे भग्ने, अन्येषु वाऽऽकस्मिकोपद्रवेषु प्राप्तेषु मार्गे सुरक्षितस्थलं दृष्ट्वा तत्रैव तौ वसतिं कुरुतः । वैवाहिकमग्निञ्च प्रज्वाल्य चतस्रो व्याहृत्याहुतीर्हुत्वा, वामदेव्यगानं सम्पादयतः ।

अभिप्रायः—विपत्तौ आसां व्याहृत्याहुतीनां हवनं वामदेव्यगानञ्च मनःशान्त्यर्थं प्रभुस्मरणार्थञ्चेत्युपपद्यते । किं च गार्हस्थ्य-

44- तु०—यजु० 16.48, 58-61; तै० सं० 4.5.10.1; 11.1; मै० सं० 2.9.9, का० सं० 17.16

45- मा० गृ० 1.13.15; तु०—वा० गृ० 15.10

46- मा० गृ० 1.13.16; तु०—वा० गृ० 15.11

47- का० गृ० 26.8

48- तु०—ऋ० 10.40.13; तु०—अ० 14.2.6

49- क्र०—1.5.6; 2.5.25

जीवने सम्भाव्यमानविपत्तिभ्यो नैव भेतव्यमपितु धैर्येण ता अपाकर्त्तव्या इति ध्वन्यते ।

तुलना—गो० गृ० सूत्रे वरवधूसहितेषु वरयातृषु वरगृहं प्राप्तेषु वामदेव्यगानं विधेयमिति वर्णितम् । तत्रोक्तम्—"प्राप्तेषु वामदेव्यम्" इति ।[50] व्याहृत्याहुतीनां वर्णनमप्यत्र विहितम् । परमत्र अवशिष्टाज्येन "य ऋते चिदभिश्रिषः" इति मन्त्रपुरस्सरं रथस्याभ्यञ्जनमपि प्रतिपादितम् ।[51] आप० गृ० सूत्रं श्मशानभूमिव्यतिक्रमणकाले, भाण्डे रथे वा नष्टे सति अग्न्याधानादि परिषेचनान्तं कर्म कुर्यादिति वर्णयति । तत्र सूत्रितम्—"श्मशानाधिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति" इति ।[52] वा० गृ० सूत्रमत्र जयाहुतिकरणं प्रतिपादयति ।[53] शां० गृ० सूत्रे रथाङ्गे विशीर्णे कन्यामाहिताग्नेः गृहं नयेदिति वर्णितम् ।[54] पा० गृ० सूत्रमत्र नानामन्त्राभ्यां हवनं वर्णयति ।[55]

## 6- वरगृहे वध्वाः स्वागतम्

यदा वधूवरयोर्वैवाहिकरथो वरगृहं प्राप्नोति तदा काचित् कुलीना, पुत्रवती, सौभाग्यवती, ब्राह्मणी, स्वकुलस्त्री वा सम्मुखमागत्य, वध्वा हस्तं प्रगृह्य, वरेण सहितां तां स्यन्दनादवतार्य सभामण्डपं नयति । सभामण्डपद्वारमागत्य वरस्तत्रस्थान् समवेतान् जनान् प्रति समवलोक्य निम्नमन्त्रमुच्चारयति—

सुमङ्गलीरियं वधूरिमां समेत पश्यत ।
सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन ।।[56]

समुपस्थितजनाश्च "ओं सौभाग्यमस्तु । ओं शुभं भवतु ।।" इत्यादीनि आशीर्वचांसि ददति ।

---

50- गो० गृ० 2.4.5
51- तदेव 2.4.3
52- आप० गृ० 2.6.4
53- वा० गृ० 17.18
54- शां० गृ० 1.15.9
55- पा० गृ० 1.10.1
56- ऋ० 10.85.33; तु०—अ० 14.2.28, मन्त्रार्थः प्राग्व्याख्यातः । अभिप्रायोऽपि पुरस्ताद्दर्शितः ।

ततो वरो निम्नमन्त्रमुच्चार्य वधूं सभामण्डपं नयति—

इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि।
एना पत्या तन्वं सं सृजस्वाधा जिव्री विदथमा वदाथः ।।[57]

**मन्त्रार्थः**—हे वधु, इह अस्मिन् पतिगृहे, प्रजया भाविपुत्रपुत्र्यादिभिः सह, ते तव, प्रियं क्षेमः, सुखमैश्वर्यादिकं वा समृध्यतां वर्द्धताम्। त्वम् अस्मिन् गृहे गार्हपत्याय गृहस्वामिनीत्वाय जागृहि प्रबुध्यस्व सावहिता भवेत्यर्थः। एना अनेन सहभूतेन पत्या भर्त्रा तन्वं स्वशरीरं संसृजस्व संपृक्तं कुरु। अध अथ च जिव्री वृद्धौ सन्तौ वानप्रस्थाश्रमं वा प्रविश्य विदथं ज्ञानम् आ वदाथः आ वदतम्, ज्ञानोपदेशं कुरुतमित्यर्थः।[58]

तत्पश्चात् वधूवरौ यज्ञकुण्डस्य समीपं गच्छतः। तदानीं वरो निम्नमन्त्रमुच्चार्य यज्ञकुण्डस्य पश्चिमाशायां पूर्वाभिमुखं स्वदक्षिणभागे पीठासने तृणासने वा वधूमुपवेशयति—

ओम् इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः।
इहो सहस्रदक्षिणोऽपि पूषा नि षीदतु ।।[59]

**मन्त्रार्थः**—इह गृहस्याश्रमे, गावः धेनवः, इह अश्वाः सैन्धवाः, इह पूरुषाः मानवाः, प्रजायध्वम् जनिं गच्छन्तु, प्रजा जनयन्तु वा। इह उ निश्चयेन सहस्रदक्षिणः सहस्रं दक्षिणा यस्य सः, पूषा पोषकः पतिः अपि निषीदतु उपविशतु।

**अभिप्रायः**—अनेन विधिना वधूर्गार्हस्थ्यजीवने स्वामिनी भूत्वा ईर्ष्याकलहादिकण्टकानपाकुर्यात् स्नेहसुमनोगन्धांश्च विकिरेदिति ज्ञाप्यते। वध्वाः कारणेन पतिगृहे कलहो मा स्म भूदित्याशयः। मन्त्रस्य तृतीयपादेन वरो वधूं निःसङ्कोचभावेन स्वगृहे सहवासार्थमामन्त्रयति। अनेन प्रजोत्पत्तिविषये लज्जया नैव भवितव्यमिति ध्वन्यते। मन्त्रस्य चतुर्थपादेन च स स्वयं वध्वा सहाजीवनं सत्यभाषणस्य ज्ञानप्रसारणस्य च संकल्पं धारयति। ज्ञानप्रसारणं गृहस्थस्यापि कर्त्तव्यं वर्त्तत इत्यनेन सूच्यते।

---

57- ऋ० 10.85.27; तु०—अ० 14.1.21

58- यद्यपि मन्त्रोऽयं न वरोक्तिस्तथाप्यत्र वरद्वारा पठने विनियोगात् मया पत्या तन्वं संसृजस्व, आवां जिव्री सन्तौ विदथमावदिष्यावः इत्याशयो ग्राह्यः।

59- अ० 20.127.12; मं० ब्रा० 1.3.13; तु०—पा० गृ० 1.8.10

तुलना—आ० गृ० सूत्रे वैवाहिकप्रयाणकाले यदि वसतौ वसतौ ईक्षकाः स्युस्तदा तान् "सुमङ्गलीरियं वधूः" इत्यनेन मन्त्रेण वरो वधूं दर्शयेदिति वर्णितम्।[60] "इह प्रियं प्रजया ते समृध्यताम्" इति मन्त्रेण च वध्वा गृहप्रवेशनं तत्र प्रतिपादितम्।[61] गो० गृ० सूत्रे संस्कारविधौ पठितो विधिर्लभ्यते परं तत्र कन्याया आनडुहे चर्मण्युपवेशनमपि प्रतिपादितम्।[62] ततश्च वध्वाः क्रोडे यस्य कस्यचिद् बालकस्य स्थापनं, बालकस्याञ्जलौ शकलोटानां (शालूकानां) फलानां वा वपनमित्याद्याः विषयोऽपि प्रतिपादिताः।[63] शां० गृ० सूत्रेऽपि "इह प्रियं प्रजया ते समृध्यताम्" इति मन्त्रो वरवध्वोर्गृहप्रवेशकाले विनियुक्तः।[64] जै० गृ० सूत्रे वृद्धाद्वारा वधूं यानादवतारणकाले "मन्त्रोऽयं पठ्यते।"[65] आप० गृ० सूत्रानुसारं गृहप्रवेशतः पश्चात् वध्वा उपस्थे यदा कश्चिद् बालक उपस्थाप्यते तदा वरो मन्त्रमिमं जपति।[66]

मा० गृ० सूत्रानुसारं यदा वरो वध्वा सह स्वगृहान्तिकमाप्नोति तदा तेन निम्ननिर्दिष्टो मन्त्र उच्चार्यते[67]—"येष्वध्येति प्रवसन् येषु सौमनसं महत्। तेनोपह्वयामहे ते नो जानन्त्वागतम्॥"[68] अत्र पतिगृहप्रवेशकाले वध्वा निम्नमन्त्रः पठ्यते—'गृहानसं सुमनसः प्रपद्ये वीरं हि वीरवतः सुशेवा। इरां वहन्ती घृतमुक्षमाणास्तेष्वहं सुमनाः संवसामः॥"[69] आप० गृ० सूत्रे, वरगृहे प्राप्ते सति वरो वधूं स्वगृहान् सम्यक्तया प्रदर्शयेदिति

---

60- आ० गृ० 1.8.7; तु०—गो० गृ० 2.2.13, जै० गृ० 22.10, बौ० गृ० 1.5.30, मा० गृ० 1.12.1, वा० गृ० 14.25, खा० गृ० 1.3.27, कौ० सू० 1.3.27

61- आ० गृ० 1.8.8

62- गो० गृ० 2.2.14; 2.4.6

63- तदेव 2.4.7-10

64- शां० गृ० 1.15.22

65- जै० गृ० 22.19

66- आ० गृ० 2.6.11

67- मा० गृ० 1.14.5

68- ऋ० 7.60.3, यजु० 3.42 इत्येतयोः पाठभेदसहितः।

69- मा० गृ० 1.14.6, तु०—वा० गृ० 15.17, बौ० गृ० 1.5.7, आप० गृ० 2.6.8, का० गृ० 27.3, हि० गृ० 1.29.4, शां गृ० 3.5.3

वर्णितम् । ततश्च रथादश्वोन्मोचनकाले दक्षिणस्थस्याश्वस्य प्राग्-विमोचनं उत्तरस्थस्य च पश्चात् कुर्यादिति प्रतिपादितम् । अत्र आनडुहचर्मास्तरणप्रकारः, वध्वा दक्षिणेन पदा गृहप्रवेशः, वध्वाः क्रोडे पुंस्वा जीवपुत्रायाः स्त्रियाः पुत्रस्थापनं, पुत्रहस्ते च फलदानमित्याद्याः विषयोऽपि वर्णिताः ।[70] वा० गृ० सूत्रम् आनडुहचर्मणो व्यतिरिक्तं दर्भासनस्यापि विकल्पं दर्शयति । तत्र वधूक्रोडे बालकस्थापनं, तदञ्जलौ फलतिलतण्डुलादीनामावपनञ्चापि वर्णितम् ।[71]

आप० गृ०, भा० गृ०, जै० गृ०, हि० गृ०, वै० गृ०, आग्नि० गृ० सूत्रेषु आर्षभचर्मण्युपवेशनकाले 'इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो अपि पूषा निषीदतु ॥ इति मन्त्रो विनियुक्तः ।[72]

## 7- यज्ञायोजनं, सामान्यहोमः, प्रधानहोमश्च

यज्ञकुण्डस्य समीपे उपविश्य वरवध्वौ यज्ञायोजनं कुरुतः । प्राक् "ओम् अमृतोपस्तरणमसि स्वाहा" इत्यादिभिस्त्रिभिर्मन्त्रैस्त्रीण्याचमनानि कृत्वा यज्ञकुण्डे यथाविधि समिधाचयनमग्न्याधानमग्निप्रदीपनञ्च सम्पादयतः । प्रदीप्ते चाग्नौ तेनाग्निना घृतमुष्णीकृत्य, समिदाधानं कृत्वा, "ओम् अग्नये स्वाहा" इत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आघारा-वाज्यभागाहुतीः, "ओम् भूरग्नये स्वाहा" इत्यादिभिश्चतस्रो व्याहृत्या-हुतीः, "ओम् त्वं नो अग्ने" इत्यादिभिश्चाष्टाज्याहुतीर्हुत्वा निम्न-लिखितमन्त्रैः प्रधानहोमं प्रारभेते ।

**अष्टौ आज्याहुतयः—**

ओम् इह धृतिः स्वाहा । इदमिह धृत्यै—इदन्न मम ॥1॥
ओम् इह स्वधृतिः स्वाहा ॥ इदमिह स्वधृत्यै—इदन्न मम ॥2॥
ओम् इह रन्तिः स्वाहा ॥ इदमिह रन्त्यै—इदन्न मम ॥3॥
ओम् इह रमस्व स्वाहा ॥ इदमिह रमाय—इदन्न मम ॥4॥
ओं मयि धृतिः स्वाहा ॥ इदं मयि धृत्यै—इदन्न मम ॥5॥
ओं मयि स्वधृतिः स्वाहा ॥ इदं मयि स्वधृत्यै—इदन्न मम ॥6॥

---

70- आप० गृ० 2.6.6–11
71- वा० गृ० 17.19
72- क्र०—2.6.10, 1.18, 22.2, 1.22.9, 3.5, 1.4.5, हि० गृ० सूत्रं विहायान्यत्र सामान्यपाठभेदोऽपि लभ्यते ।

ओं मयि रमः स्वाहा ॥ इदं मयि रमाय—इदन्न मम ॥7॥
ओं मयि रमस्व स्वाहा ॥ इदं मयि रमाय—इदन्न मम ॥8॥[73]

**मन्त्रार्थः**—इह पतिकुले मयि वरे वा धृतिः धैर्यम् अस्ति। यद्वा धृतिर्ध्रुवता स्थिरता धारणा वा। इह पतिकुले मयि वरे वा स्वधृतिः आत्मनिर्भरता विद्यते। इह पतिकुले मयि वरे वा रन्तिः रमणसाधन-समूहो रमणसामर्थ्यं वा वर्त्तते। हे वधु, त्वमिह रमस्व रमणं कुरु विविधं क्रीडेत्यभिप्रायः, रमु क्रीडायाम्। इति वरोक्तिः। अथ वधूक्तिः। मयि वध्वां धृतिः धैर्यं ध्रुवता धारणा च विद्यते। मयि वध्वां स्वधृतिः आत्मनिर्भरता विद्यते। मयि वध्वां रमः त्वया सह रमणेच्छा वर्त्तते। अतस्त्वं मयि वध्वां रमस्व रमणं कुरु।

**अभिप्रायः**--वरो ब्रूते यन्मयि धैर्यध्रुवताधारणाऽऽत्मनिर्भरता-रमणसामर्थ्यादिगुणा वर्त्तन्ते, वधूं च स आत्मना सार्धं स्वगृहे रमणाय, क्रीडनाय, आह्लादमयजीवनाय च निमन्त्रयते। वधूः वरं विश्वासयति यन्मय्यप्येते गुणा निवसन्ति। सापि पतिमात्मना सह रमणार्थमामन्त्र-यति। प्रतिमन्त्रं होम कुर्वद्भ्यां ताभ्यामेतेषां गुणानां स्थिरीकरणाय हृदये भावना समुद्दीप्यते। स्वाहापूर्वकमिदं हवनमेतेषां धृत्यादिगुणानां समुद्बोधाय विद्यते न स्वार्थायेति भावः।

**तुलना**—गो० गृ० सूत्रे आसामष्टाज्याहुतीनां सङ्केतः प्राप्यते। तत्र सूत्रितम्—"उत्थाप्य कुमारं ध्रुवा आज्याहुतीर्जुहोत्यष्टौ—इह धृतिः, इति।"[74] अन्यगृह्यसूत्रेषु पाठभेदसहिता इमे मन्त्राः विभिन्न-प्रसङ्गेषु न्यूनाधिक्येन पठिताः।[75] गो० गृ० सूत्रानुसारमेभिर्मन्त्रैर्वधू-र्जुहोति, जै० गृ० सूत्रमते च वरः।[76]

**चतस्र आज्याहुतयः**—
ततो वधूवरौ निम्नमन्त्रैश्चतस्र आज्याहुतीर्जुहुतः—

---

73- तु०—म० ब्रा० 1.3.14
74- गो० गृ० 2.4.10
75- द्र०—हि० गृ० 1.12.2; आग्नि० गृ० 1.4.1; वा० गृ० 5.37; मा० गृ० 1.1.22; शां० गृ० 3.11.4; पा० गृ० 3.9.4; का० गृ० 59.3; आ० गृ० 7.19.9
76- गो० गृ० 2.4.10; जै० गृ० 1.22

ओम् आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमा विश शं नो भव द्विपदे शं चतुष्पदे स्वाहा ॥1॥
ओम् अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्देवृकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे स्वाहा ॥2॥
ओम् इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु ।
दशास्यां पुत्राना धेहि पतिमेकादशं कृधि स्वाहा ॥3॥
ओं सम्राज्ञी श्वसुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु स्वाहा ॥4॥[77]

**मन्त्रार्थः**—प्रजापतिः प्रजापालकः परमेश्वरः गृहपतिर्वरो वा, नः अस्मभ्यं प्रजाम् पुत्रान् पुत्रीश्च, आ जनयतु आसमन्तात् उत्पादयतु । अर्यमा य ऋच्छति नियच्छति भूतानि स नियन्ता परमेश्वरः न्यायकारी राजा वा, आजरसाय वृद्धावस्थापर्यन्तं जीवनाय समनक्तु सुखसाधनानि प्रापयतु । यद्वा जरावस्थापर्यन्तम् आवाम् संयोजयतु । हे वधु, अदुर्मङ्गलीः दुर्मङ्गलरहिता समुङ्गलीरूपा त्वम्, पतिलोकं भर्तृ गृहम्, आविश प्रविश । नः अस्मभ्यं, द्विपदे मनुष्यवर्गाय, चतुष्पदे पशुवर्गाय च, शं कल्याणकारिणी भव ॥

"अघोरचक्षुः" इति मन्त्रः प्राग्व्याख्यातः ॥2॥[78]

हे इन्द्र परमैश्वर्यवन्, मीढ्वः सेचनसमर्थपते, त्वम्, इमां सम्मुखे स्थितां वधूं, सुपुत्रां सुपुत्रवतीं, सुभगाम् ऐश्वर्यवतीं च कृणु कुरु । अस्याम् वध्वां दश दशावधिकान् पुत्रान् आधेहि उत्पादय । पतिं पतिरूपमात्मानञ्च एकादशम् एकादशतमं, कृधि मन्यस्व । वधूरपि दशपुत्रान् उत्पाद्य पतिमेकादशतमं विजानीयात् ॥3॥

हे वधु, त्वं श्वशुरे मम पितरि, श्वश्र्वां मम मातरि, ननान्दरि मम भगिन्यां, देवृषु अधि मम भ्रातृषु, सम्राज्ञी प्रीत्या सम्यक् प्रकाशिता सम्राज्ञीतुल्या, भव भूयाः ॥4॥

**अभिप्रायः**—प्रजापतिविशेषणेन वरवध्वोः प्रजापालनं अर्यमाविशेषणेन च तयोर्न्यायकरणं सूच्यते । वधूर्मङ्गलवती सर्वप्राणिनां कृते कल्याणकारिणी च भवेदिति प्रथममन्त्रे दर्शितम् । प्रियदर्शिनी, पतिरक्षिका, सुमनस्का, तेजस्विनी, वीरप्रसवा, देवराकांक्षिणी, सुखकर्त्री

---

77- ऋ० 10.85.43–46, स्वाहापदरहितपाठः ।

78- द्र०—पृ० 75

च वधूर्भवेदिति द्वितीयमन्त्रे वर्णितम्। वरवधूभ्यामधिकादधिकं दश-पुत्रा एवोत्पादयितव्या इति तृतीयमन्त्रे सूचितम्। चतुर्थमन्त्रेण च वधूः पतिगृहे सम्राज्ञी भूत्वा गृहकार्यं नैपुण्येन साध्नुयादिति ज्ञाप्यते।

तुलना—आ० गृ० सूत्रे आसामाहुतीनां वर्णनं लभ्यते।[79] गो० गृ० सूत्रे पाणिग्रहणविधौ विनियुक्तेषु षड्मन्त्रेष्वेषामन्तर्भावः कृतः।[80] आप० गृ० सूत्रे प्रथममन्त्रश्चतुर्थीकर्मणि, द्वितीयमन्त्रो वरद्वारा वधू-समीक्षणसमये, तृतीयो मन्त्रो मुख्ययज्ञस्याहुतिषु, चतुर्थमन्त्रश्च रथा-रोहणसमये विनियुक्तः।[81] पा० गृ० सूत्रे, जै० गृ० सूत्रे च "अघोरचक्षु" इति मन्त्रस्य विनियोगो वरद्वारा वधूसमीक्षणकाले कृतः।[82] शां० गृ० सूत्रानुसारं यदा विवाहविषये उभयोः पक्षयोः सहमतिर्जायते तदा वरपक्षीय आचार्यो वधूशिरसि पुष्पधान्ययवसुवर्णैः पूरितं पात्रं स्थापयन् "आ नः प्रजाम्०" इत्यादिमन्त्रान् पठति।[83] अस्मिन् गृह्यसूत्रे चतसृणाम् आहुतीनां कृते निम्नमन्त्रा विनियुक्ताः—अग्निना देवेन पृथिवीलोकेन लोकानामृग्वेदेन वेदानां तेन त्वा शमयाम्यसौ स्वाहा ॥1॥ वायुना देवेनान्तरिक्ष-लोकेन लोकानां यजुर्वेदेन वेदानां··· ॥2॥ सूर्येण देवेन द्यौलोकेन लोकानां साम-वेदानां···॥3॥ चन्द्रेण देवेन दिशां लोकेन लोकानां ब्रह्मवेदेन वेदानां···॥4॥ इति।[84] आप० गृ० सूत्रे त्रयोदशमन्त्रैस्त्रयोदश आहुतयो वर्णिताः।[85] का० गृ० सूत्रे पञ्चदश आहुतयः प्रतिपादिताः।[86]

## 8- दधिप्राशनम्

ततो वधूवरौ एकां स्विष्टकृदाहुतिं, चतस्रो व्याहृत्याहुतीः, एकां प्राजापत्याहुतिञ्च हुत्वा, निम्नमन्त्रमुच्चार्य दधिप्राशनं कुरुतः—

समञ्जन्तु विश्वदेवाः समापो हृदयानि नौ।
सं मातरिश्वा सं धाता समु देष्ट्री दधातु नौ ॥[87]

---

79- आ० गृ० 1.8.9
80- गो० गृ० 2.2.15
81- आ० गृ० 3.8.10, 2.4.4, 2.5.2,22
82- क्र०—1.4.16, 21.7
83- 1.6.6
84- शां० गृ० 1.16.3
85- आ० गृ० 2.6.10
86- का० गृ० 28.4
87- ऋ० 10.85.47

अयं मन्त्रः पुरस्ताद् व्याख्यातः।[88]

अभिप्रायः—दधिभक्षणविधिना वधूवरौ परस्परस्यैकतायै संकल्पयतः। यथा दध्नि सर्पिः संपृक्तं भवति तथैव वधूवरावपि शरीरेण भिन्नावपि हृदयेन संपृक्तौ भवेतामित्यनेन सूच्यते। किंच गार्हस्थ्यजीवने स्वास्थ्यलाभाय दधि भोक्तव्यमित्यपि द्योत्यते। दधिगुणाश्चरकाचार्यैरित्थं वर्णिताः—"रोचनं दीपनं वृष्यं स्नेहनं बलवर्द्धनम्। पाकेऽम्लमुष्णं वातघ्नं मङ्गल्यं बृंहणं दधि॥ पीनसे चातिसारे च शीतके विषमज्वरे। अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते॥ इति।[89]

तुलना—गो० गृ०, खा० गृ० सूत्रानुसारं सप्तपदीतः पश्चात् वरवध्वोः शिरसि जलाभिषिञ्चनकालेऽयं मन्त्र उच्चार्यते।[90] आ० गृ० सूत्रकारमतेऽनेन मन्त्रेण दधि भुज्यते, वरश्च शिष्टाज्येन वध्वा हृदयमनक्ति।[91] आप० गृ० सूत्रे चतुर्थीकर्मण्ययं मन्त्रः पतिद्वारा स्वस्य वध्वाश्च हृदयानुलेपनकाले विनियुक्तः।[92] शां० गृ०, का० गृ० वा० गृ० सूत्रेषु दधिभक्षणकाले निम्नमन्त्रो विनियुक्तः[93]—"दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत्॥"[94] वा० गृ० सूत्रानुसारं यदा वरो दधि भुक्त्वा शिष्टं वध्वै प्रयच्छति तदा स निम्नमन्त्रमुच्चारयति[95]—"चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः। मां च पश्यसि सूर्यं च मा चान्येषु मनस्कृथाः। चाक्रवाकं संवननं तन्नौ संवननं कृतम्॥" इति।

## 9- अभिवादनम्, वामदेव्यगानम्, ईश्वरोपासना च

दधिप्राशनानन्तरं वधूवरौ "अहं भो अभिवादयामि" इति वाक्यमुच्चार्य वरस्य मातापित्रादिवृद्धपुरुषान् सश्रद्धं नमस्कुरुतः।[96] ततः

---

88- द्र०—पृ० 73
89- चरके सूत्रस्थाने 27 अध्याये, द्र०—सु० सू०, अ० 45
90- क्र०—2.2.15; 1.3.30
91- आ० गृ० 1.8.9
92- आप० गृ० 3.8.10
93- क्र०—1.17.1; 28.5; 18.10
94- यजु० 23.32; अ० 20.137.3
95- वा० गृ० 18.12; द्र०—मा० गृ० 1.14.12; बौ० गृ० 1.4.5; हि० गृ० 1.24.6; भा० गृ० 1.17; आग्नि० गृ० 1.5.4
96- तु०—गो० गृ० 2 4.11

सुभूषितौ शुभासनस्थौ तौ वामदेव्यगानमीश्वरोपासनाञ्च सम्पादयतः। तदानीं कार्यार्थमागताः स्त्रीपुरुषा अवहितेन मनसा परमेश्वरं ध्यायन्ति ।

## 10- स्वस्तिवाचनम् आशीश्च

अन्ते वरवध्वौ पित्राचार्यपुरोहितादिवृद्धपुरुषान् ब्रूतः—"ओं स्वस्ति भवन्तो ब्रुवन्तु" इति ।[97] तदानीं पिता, आचार्यः, पुरोहितः, वेदविदौ वधूवरौ सर्वे "अग्निमीळे पुरोहितम्" इत्यादिभिरेकत्रिंशन्मन्त्रैः स्वस्ति-वाचनं पूर्णश्रद्धया कुर्वन्ति । पाठानन्तरं कार्यार्थमागताः समुपस्थिताः स्त्रीपुरुषाः "ओं स्वस्ति ओं स्वस्ति ओं स्वस्ति" इति वाक्यमुच्चारयन्ति । ततोऽभ्यागतसत्कारपुरस्सरं यज्ञसमाप्तिर्भवति । इत्थं विवाहविधिः समाप्यते ।

०:—:०

97- "अथ स्वस्त्ययनं वाचयीत" आ० गृ० 1.8.5

# अष्टमोऽध्याय:

## 1- गृहस्थाश्रमस्य महत्त्वम्

वेदेषु विभिन्नस्थलेषु गृहस्थाश्रमस्य महत्त्वं प्राप्यते। ऋग्वेदीय-दशममण्डलस्य पञ्चाशीतितमे सूक्ते, अथर्ववेदीयचतुर्दशकाण्डे च गार्हस्थ्यमहत्त्वविषये विशदविचारा उपलभ्यन्ते। गृहस्थेनाऽमृतत्व-माप्यत इति वेदे समुल्लिखितम्—"प्रजाभिरग्ने अमृतत्वमश्याम्" इति।[1] मरणधर्मा मनुष्य: सन्ततिभिरेव अमृतो भवति। अथर्ववेदे गृहस्थ: स्वर्गोऽस्तीत्युक्तम्—"घृतह्रदा मधुकूला: स्वर्गे लोके मधुमत् पिन्वमाना:"; "यत्रा सुहार्द: सुकृतो मदन्ति विहाय रोगं तन्व: स्वाया:। अश्लोणा अङ्गैरह्रुता: स्वर्गे तत्र पश्येम पितरौ च पुत्रान्॥" इति।[2]

स्मृतिकारा: सर्वाश्रमेषु गृहाश्रमस्य ज्येष्ठत्वं वर्णयन्ति। मनुमते-यथा सर्वजन्तवोऽनिलं समाश्रित्य वर्तन्ते तथैव सर्वे आश्रमा गृहस्था-श्रममाश्रित्य वर्तन्ते। गृहस्थेनैव दानेनान्नेन च ब्रह्मचर्याद्याश्रमा धार्यन्ते, अतो गृही सर्वश्रेष्ठ:।[3] नद्यो यथा सागर एव संस्थितिमाप्नु-वन्ति तथैवेतरे त्रयोऽप्याश्रमा गृहस्थेऽस्तित्वं भजन्ते।[4] गृहस्थाश्रम एव ब्रह्मचर्यादीनां समेषामाश्रमाणां पोषकत्वाच्छ्रेष्ठो विद्यते।[5] व्यास-स्त्वेवमाह—"गृहाश्रमात् परो धर्मो नास्ति नास्ति पुन: पुन:। सर्वतीर्थफलं तस्य यथोक्तं यस्तु पालयेत्॥" इति।[6] सत्यं खल्वेतद् देवैर्मनुष्यैस्तिर्य-ग्भिश्च गृहस्थद्वारैव प्राप्यते। यतो गृहस्थाश्रम एव सर्वाश्रमाणां प्राणिनाञ्च योनिरस्ति। यदि गृहस्थस्य प्रसारो न स्यात्तर्हि इतर आश्रमा: सीदेयु:।[7]

---

1- ऋ० 5.4.10; तै० सं० 1.4.46.1
2- अ० 4.34.6; 6.120.3
3- मनु० 3.77-78; द्र०—5.169; तु०—व० स्मृ० 8.14,16
4- मनु० 6.9; तु०—स्मृ० 8.15; म० भा० 12.295.39
5- मनु० 6.8.9; द्र०—द० स्मृ० 2.57-58,60; शं० स्मृ० 5.5-6; वि० स्मृ० 59.27; आश्व० स्मृ० 15.1
6- व्या० स्मृ० 4.2
7- मनु० 6.87; द्र०—द० स्मृ० 2.58

धर्मसूत्रेष्वपि गृहस्थाश्रमस्य माहात्म्यगीतिः सुगीता। गौतमबौधायनयोर्मते सर्वाश्रमाणां योनित्वात् गृहस्थ एव ज्येष्ठः। यथा ताभ्यामुक्तम्—"तेषां गृहस्थो योनिरप्रजनत्वादितरेषाम्", "ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम्" इति।[8] त्रिभ्यः ऋणेभ्यो नरः ऋणवान् भवति। ऋणमपाकर्त्तुमपि गृहस्थाश्रमोऽनिवार्यः। यथोक्तं वेदे—"एतत्तदग्ने अनृणो भवामि।" इति।[9] बौधायनोऽप्याह—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति॥ सत्पुत्रमुत्पाद्याऽऽत्मानं तारयति। तस्माद् यत्नवान् प्रजामुत्पादयेत्" इति।[10]

महाभारतेऽपि वैशिष्ट्येन गृहस्थाश्रमस्य गौरवं कीर्त्तितम्। तन्मते यो जनः प्रजा न जनयति सोऽधार्मिक इत्युच्यते। यथोक्तम्—"अप्रजायन्नरव्याघ्र भवत्यधार्मिको नरः" इति।[11] पुत्ररूपनावा एव संसारस्तीर्यते—"पितॄन् पुत्रप्लवेन त्वमात्मानं चैव तारय।"[12] गृहाश्रमः खलु मातृवद्वर्त्तते। यथा सर्वे जन्तवो मातरमाश्रित्य जीवन्ति तथैवेतर आश्रमा गार्हस्थ्यमाश्रित्य जीवन्ति।[13] गृहाश्रमस्य तुलनां न कश्चिदपीतर आश्रमोऽर्हति। अपितु अन्ये त्रय आश्रमाः संमिल्यैव गृहस्थतुलनामर्हन्ति, इत्युक्तं महाभारते—"आश्रमांस्तुलया सर्वान् धृतानाहुर्मनीषिणः। एकतश्च त्रयो राजन् गृहस्थाश्रम एकतः।"[14] प्रजाहीनाय स्वर्गं नास्तीत्युक्त्वा महाभारतकारेण गृहाश्रमं प्रति स्वश्रद्धाकुसुमान्येव समर्पितानि—"अप्रजस्य महाभागा न द्वारं परिचक्षते।"[15] तन्मते कामं कश्चिन्नरस्तपस्तप्येत, यदि सोऽनपत्यस्तर्हि सर्वमनुष्ठितं तस्य पावनं

---

8- गौ० ध० 3.3,35; बौ० ध० 2.6.29; तु०—म० भा०—"गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्त्तते", 12.169.5

9- यजु० 19.11; द्र०—द० भा०

10- बौ० ध० 2.9.7-8,11; 5.6.9; तु०—तै० सं० 6.3.10 5; श० ब्रा० 1.7.2.10; ऐ० ब्रा० 33.1; म० भा० 1.120.15

11- म० भा० 12.34.14

12- म० भा० 5.118.7; तु०—म० भा० 1.120.16,29-30; ऐ० ब्रा० 33.1; तै० ब्रा० 3.7.7.10; गो० ब्रा० 1.1.2; मनु० 9.137; व० स्मृ० 17.1; वि० स्मृ० 15 43-46

13- म० भा० 12.169.6

14- म० भा० 12.12 12

15- म० भा० 1.120.15

नैव परिगण्यते। यथोक्तम्—"इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः। सर्वमेवानपत्यस्य न पावनमिहोच्यते।।"[16] "गृहस्थ एव यजते गृहस्थस्तप्यते तपः। गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेजते" इति।[17]

स्वामिदयानन्देन संस्कारविधेर्गृहाश्रमप्रकरणे गृहस्थाश्रमस्य विशिष्टं महत्त्वं प्रतिपादितम्। तत्र प्रकरणस्यारम्भ एव श्रुतिस्मृतीनां पर्याप्तप्रमाणानि प्रदत्तानि यैर्गृहस्थाश्रमस्यावश्यकत्वं महत्त्वञ्च प्रकटितं जायते। सत्यार्थप्रकाशेऽपि स्वामिदयानन्दो गार्हस्थ्यमाहात्म्यं प्रतिपादयन् प्राह यो मोक्षानन्दं संसारसुखं च कांक्षेत् स प्रयत्नेन गृहाश्रमं धारयेत्। ··· अतः यावन्तो व्यवहाराः संसारे दृश्यन्ते तेषामाधारो गृहाश्रम एव। गृहाश्रमो न स्याच्चेत् सन्तानोत्पत्ति विना ब्रह्मचर्यवानप्रस्थसंन्यासाश्रमाः कुतः स्युः। यो वै गृहाश्रमं निन्दति स एव निन्द्यः यश्च प्रशंसति स एव प्रशंसनीयोऽस्ति।[18] वेदभाष्येऽपि स्वामिना प्रोक्तम्—"नैव केनापि गृहाश्रमानुष्ठानात् कदाचिद् भेतव्यं कम्पनीयं च। कुतः? सर्वेषां सद्व्यवहाराणामाश्रमाणां च गृहाश्रमो मूलमस्त्यत एष सम्यगनुष्ठातव्यः। नैतेन विना मनुष्यवृद्धी राज्यसिद्धिश्च जायते।[19]

धर्मार्थकाममोक्षात्मकं पुरुषार्थचतुष्टयमपि गृहाश्रमादेव प्राप्यते। अतोऽपि गृहाश्रमो ज्येष्ठः। चाणक्य आह—यदि रामा यदि च रमा यदि तनयो विनयधीगुणोपेतः। तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम्॥ सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी, सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः। आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे, साधोः संगमुपासते हि सततं धन्यो गृहस्थाश्रमः॥[20]

इत्थं श्रुतिस्मृतिब्राह्मणोपनिषदारण्यकधर्मसूत्रगृह्यसूत्रेतिहासादिप्रमाणैर्गार्हस्थ्यमाहात्म्यं प्रकाशितं जायते।

16- म० भा० 1.120.29; 3.100.4

17- म० भा० 12.169.7

18- स० प्र०, पृ० 179; अनूदितम्, तु०—सं० वि०, पृ० 214–15; द्र०—म० भा०—'कस्यैषा वाग्भवेद् सत्या मोक्षो नास्ति गृहादिति', 12.169.10

19- यजु० 3.41, द० भा०

20- चा० नी० 21.16

# 2· एकपत्नीत्वम्

वेदेषु स्पष्टतया एकविवाहविषयो निर्दिष्टः। एकस्मिन् समये एकस्य पत्युरेकैव पत्नी स्यादिति वेदानामभिप्रायः । सपत्नीभाक् कष्टमेवाश्नुत इत्यृग्वेदे उपमालङ्कारेण दर्शितम् । यथा - "सं मा तपन्त्यभितः सपत्नीरिव पर्शवः", "उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः", "क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः" इत्यादिः।[21] ऋग्वेदीयम्—"उपनिषत्सपत्नीबाधनम्" सूक्तमप्येकपत्नीत्वमेव पोषयति । तत्र प्रार्थितम्— "सपत्नीं मे परा धम पतिं मे केवलं कुरु" इति।[22] सपत्नी खलु न्यक्कर्त्री पतनकारयित्री च भवति, अतो वयं तां दूरं गमयेम—"अथा सपत्नी या ममाधरा साधराभ्यः", "परामेव परावतं सपत्नीं गमयामसि"।[23] ऋग्वेदेऽन्यत्राप्येतद्विषये वर्णितम् । यथा—"समजैषमिमा अहं सपत्नीरभिभूवरी" इत्यादि।[24]

धर्मसूत्राणामनुसारं विवाहस्य धर्मप्राप्तिः प्रजाप्राप्तिश्चेति लक्ष्यद्वयमस्ति । अत आपस्तम्बेन धर्मिण्यां पुत्रवत्याञ्च पत्न्यां सत्यां नान्यां भार्यामुद्वहेदित्युपदिष्टम्—धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत इति।[25] यश्चैनं नियममतिक्रामति तस्मै दण्डविधानमपि तेन दर्शितम्—"दारव्यतिक्रमी खराजिनं वहिर्लोम परिधाय दारव्यतिक्रमणे भिक्षामिति सप्ताऽऽगाराणि चरेत् । सा वृत्तिः षण्मासान् ॥" इति।[26]

महाभारतकारेणापि बहुपत्नीत्वकष्टं सम्यक्तया प्रतिपादितम् । आदिपर्वण्युक्तम्—स्त्रीभ्यः सपत्नीजनवत् कष्टदायकं न किंचन वस्तु विद्यते।[27] अतस्तत्रोक्तम्—"त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम् । परित्यक्तुं न पश्यामि भार्यां नित्यमनुव्रताम्" इति।[28]

---

21- ऋ० 1.105.8; 10.101.11; 1.104.3
22- तु०—अ० 3.18.2
23- तु०—अ० 3.18.4,3
24- ऋ० 10.159.6
25- आप० ध०, प्रश्न० 2 पटल० 5 कण्डिका० 11 सूत्र 12
26- तदेव, 1.10.28.19
27- म० भा० 1.132.26; द्र०—1.68.83-84; 5.31.32
28- तदेव, 1.159.33-34

स्वामिदयानन्देनापि वेदभाष्ये प्रोक्तम्—"तौ यथा सपत्न्यौ परस्परस्य कलहक्रोधाभ्यां नद्या मध्ये निमज्ज्य प्राणांस्त्यजतस्तथा सद्यो विनश्यतः" ।[29] सत्यार्थप्रकाशस्य चतुर्थसमुल्लासेऽप्ययं विषयः प्रश्नोत्तरमाध्यमेन समुपस्थापितः । तत्रायमादर्शो दर्शितः—युगपद्बहुविवाहे हानिर्भवति ।

## 3- अन्योन्यमपरित्यागः

स्त्रीपुरुषयोरकारणं परस्परं परित्यागप्रथा न वेदानुमोदिता । ऋग्वेदीयविवाहसूक्ते जायापतिभ्यां परस्परं नैव वियोक्तव्यमित्युपदिष्टम्—"इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्", "मया पत्या जरदष्टिर्यथासः", "इहेमाविन्द्र सं नुद चक्रवाकेव दम्पती····· विश्वमायुर्व्यश्नुताम्" इत्यादि[30] प्रमाणानि परित्यागं विरुन्धन्ति ।

मनुस्मृतावपि स्त्रीपुंसौ वियुक्तौ न भवेतामित्युक्तम् । एकविवाहस्यादर्शं प्रतिपादयन् जायापत्योरेषः संक्षिप्तधर्मस्तत्र वर्णितः—"तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ । यथा नाभिचरेतां तु वियुक्तावितरेतरम्" इति ।[31]

पतिव्रता पत्नी वेदे स्वभर्त्तारं पत्नीव्रते स्थातुं प्रेरयति । अथर्ववेदे, पत्या अन्यासां स्त्रीणामाकांक्षां परित्यज्य पत्नीव्रत एव स्थातव्यमिति प्रतिपादितम्—"यथाऽसो मम केवलो नान्यासां कीर्तयाश्चन", "मामनु प्र ते मनः", "अन्तः कृणुष्व मा हृदि मन इन्नौ सहासति', 'ममेदसस्त्वं केवलो नान्यासां कीर्तयाश्चन" इत्यादि ।[32] अथ पतिरपि पत्नीं पातिव्रत्ये स्थातुं प्रेरयति—"यथा मां कामिन्यसो यथा मन्नापगा असः" इति ।[33]

## 4- गृहस्थस्त्रीपुरुषाणां गुणा आचाराश्च

अथ स्त्रीपुरुषाभ्यां कैर्गुणैः कैराचारैश्चान्विताभ्यां भवितव्यमिति विचार्यंते ।

**स्त्रीगुणाः—**

उषःसूक्तेषु सर्वत्रोपमालङ्कारमाध्यमेन स्त्रीगुणा विज्ञाता भवन्ति । स्वामिदयानन्देन उषःसूक्तानां भाष्ये स्त्रीगुणाः स्पष्टतया प्रकाशिताः ।

---

29- ऋ० 1.104.3, भावार्थः ।
30- ऋ० 10.85.42,36; अ० 14.1.52, 2.64
31- 9.102
32- अ० 14.2.64; 3.18.6; 7.36.1; 7.38.4
33- अ० 2.30.1

ऋग्भाष्ये लिखितम्—सैव स्त्री वरा या उषर्वद्वर्त्तते।[34] महर्षिमते सत्यवाक्, प्रशंसिता, अद्वेषिणी, सुहृद्वदाज्ञानुकारिणी, सेविका, सुखप्रदा, हृद्या, प्रिया, सुलक्षणा, अद्भुतरूपा, पतिव्रता, सर्वाङ्गसुन्दरी, बहुप्रजोत्पादयित्री, शुभगुणकर्मस्वभावा, सत्यशास्त्रश्रवणादियुक्ता, बलिष्ठा, विचक्षणा, धनैश्वर्यवर्धिका, तद्रक्षणतत्परा च स्त्री सूत्तमा भवति।[35]

किंप्रकारिकया विदुष्या स्त्रिया भवितव्यमित्यत्र यजुष्युक्तम्—"मूर्द्धासि राड् ध्रुवासि धरुणा धर्त्र्यसि धरणी। आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा॥" "यन्त्री राड् यन्त्र्यसि यमनी ध्रुवासि धरित्री। इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा॥" अत्र स्वामिभाष्यं द्रष्टव्यम्—"या स्त्री भूमिवत् क्षमान्वितान्तरिक्षवदक्षोभा यन्त्रवज्जितेन्द्रिया भवति सा कुलदीपिकाऽस्ति" इति।[36] निम्नमन्त्रा अपि स्त्रीगुणान् विशदतया वर्णयन्ति—"स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः। अप नः शोशुचदघम्॥" "भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः।"[37] स्त्रिया दूर्वौषधिवद् रोगप्रणाशिकया सुखवर्द्धिकया च भवितव्यमिति यजुर्वेदे प्रोक्तम्।[38] स्त्री इष्टकावत् शतप्रकारेण स्वकुलं वर्धयति।[39] सा शत्रुभिरप्यनभिभूयमाना शत्रुनिवारिका उत्तमपराक्रमा च भवति।[40] यजुषि स्त्रीगुणाः सम्बोधनशब्दैरित्थं प्रतिपादिताः—"इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिते सरस्वति महि विश्रुति। एता तेऽघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूयात्॥"[41]

अन्यशास्त्रेष्वपि स्त्रीगुणविषये बहु वर्णितम्। यदि स्त्री विनीता चित्तज्ञा वशवर्त्तिनी च भवति तदा तया सुखमेवाप्यते। अनुकूला, अवाग्दुष्टा, दक्षा, साध्वी, प्रियंवदा, आत्मगुप्ता, स्वामिभक्ता च स्त्री देवीत्वेन परिगण्यते। अत एवोक्तम्—"एतावद्गुणसंयुक्ता श्रीरेव स्त्री न

34- ऋ० 4.52.1; द्र० 4.52.2; 51.9; 1.49.4; 6.53.3; 1.126.6; 3.61.1; 4.52.6; इत्यादिमन्त्राणां दयानन्दभाष्यम्।
35- ऋ० 4.52.3; 14.3; 6.61.1; 6.56.5; यजु० 13.20
36- यजु० 14.21-22
37- यजु० 35.21; 13.18; द्र०—य० 13.16, द० भा०
38- यजु० 13.20, द० भा०
39- यजु० 13.21, द० भा०
40- यजु० 13.26, द० भा०
41- यजु० 8.43; द्र०—द० भा०

संशयः ॥ धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् ॥ अनुकूलकलत्रस्य स्वर्गस्तस्य न संशयः । तथा धर्मार्थकामानां त्रिवर्गफलमश्नुते ॥"[42]

**पुरुषगुणाः—**

पुरुषगुणविषयेऽपि वेदमन्त्राः प्राचुर्येण लभ्यन्ते । स्वामिदयानन्देन वेदभाष्ये पुरुषस्यानेके गुणा विज्ञापिताः । तन्मते शुभगुणकर्मस्वभावः, सत्पुरुषत्वं, सुशीलत्वं, प्रीतिमत्त्वं, सुरूपत्वं, सुयशस्त्वं, छलकपटाचरणरहितत्वं, जितेन्द्रियत्वं, धार्मिकत्वं, दातृत्वं, उद्योगित्वं, विद्वत्त्वं, सत्यता चेत्यादिभिर्गुणैः पुरुषेषु भवितव्यम् ।[43] वेदमन्त्राः पुरुषं सम्बोध्य तदन्तर्गतान् प्रसुप्तगुणान् प्रकटयन्ति तमुद्बोध्य चोन्नतिपथस्य पथिकत्वाय प्रेरयति । यथा—"अभीहि मन्यो तवसस्तवीयान् तपसा युजा विजहि शत्रून् । अमित्रहा वृत्रहा दस्युहा च विश्वा वसून्याभरा त्वं नः ॥"[44] ऋग्वेदे प्रोक्तम्—हे पुरुष त्वं यशस्वी जनकः संहर्ता चासि । "अशस्तिहा जनिता विश्वतूरसि ।"[45] त्वं महान् असि त्वत्तोऽधिकं न कश्चिदपि वर्त्तते—"महां असि न हि त्वा कश्चन प्रति ।"[46] अतस्त्वं प्रचण्डतेजसा प्रदीप्तो भव, परिपन्थिनः ज्वालयन् द्वेष्टॄन् हिंसकांश्च ताडयन् अग्रं गच्छ—"घ्नन् वृत्राण्यप द्विषो दहन् रक्षांसि विश्वहा । अग्ने तिग्मेन दीदिहि ।", "इन्द्र प्रेहि पुरस्त्वम्"[47] इत्यादि ।

कीदृग्गुणान्वितैः पुरुषैर्भवितव्यमिति विषयमधिकृत्य यजुषि बहु वर्णितम् । स्वामिदयानन्देन यजु० 17.81, 83–85 मन्त्राणां भाष्ये प्रतिपादितं यत् पुरुषः परमेश्वरतुल्यः, अन्यसज्जनसदृशः, समद्रष्टा, मानयुक्तः, सम्यक् परिमितः, विज्ञानस्योन्नायकः, सत्यस्योत्कर्षकः, सेनजित्, सुषेणः, मित्रमण्डलसंयुतः, सल्लक्षणसहितः, दुष्टशत्रुरहितः, पक्षपातहीनः, आप्तसदृशः, परिमितविज्ञानः, तुलावत् सत्यविवेचकः, स्वसमानपोषकः, विद्वान्, स्वजनसुखवर्द्धयिता, बहुभोग्यपदार्थस्वामी, शत्रुतपनः, गृहमेधी, क्रीडाशीलः, शक्तिमान् जयाकांक्षी च स्यादिति । यजुर्वेदे पुरुषो गुणवाचिभिः शब्दैरित्थं समुद्बोध्यते—हे मनुष्य, त्वं

42- द्र०—द० स्मृ० 4.1, 3-4,6,11-12,15
43- द्र०—द० भा०, यजु० 8.2; ऋ० 5.32.11
44- ऋ० 10.83.3; द्र०—द० भा०
45- ऋ० 8.99.5
46- ऋ० 8.46.2
47- ऋ० 8.43.26; 17.9

शुभलक्षणो महात्मा चासि। "सुपर्णोऽसि गरुत्मान्।"[48] सर्वदोषनाशकः, देवानां नायकः, शुद्धतमः, पूर्णतमः, प्रियतमः, देवैरपि पूज्यतमश्चासि–'धूरसि । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्।।"[49] सुखस्वरूपः, अतिशयसुखकारी, यशस्वी, सत्यवक्ता, मङ्गलकरः, सत्यप्रकाशकश्चासि—"कोऽसि कतमोऽसि ·····। सुश्लोक सुमङ्गल सत्य-राजन्।।"[50] पृथिव्या यज्ञस्य लोकानां पश्वादीनां च नेताऽसि—"भुवो यज्ञस्य रजसश्च नेता।।"[51] क्षात्रशक्तेर्मूलं केन्द्रश्च त्वमसि—"क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि" इति।[52]

अथर्ववेदः पुरुषगुणान् समुद्बोधनमन्त्रैरित्थं प्रतिपादयति—"दूष्या दूषिरसि हेत्या हेतिरसि मेन्या मेनिरसि सूरिरसि वर्चोधा असि तनूपानोऽसि स्वरसि ज्योतिरसि, आप्नुहि श्रेयांसमति समं क्राम।।"[53] हे पुरुष, तव महिमवतो महिमा महान् विद्यते। त्वं सूर्य इव महान् असि। अतो यथा समुद्रो नदीनाम्, अग्निः पृथिव्याः, चन्द्रमा च नक्षत्राणां स्वामी तथा त्वमपि सर्वश्रेष्ठो भव।[54]

पुरुषेण स्वयमपि वैदिकशब्दैः स्वगुणाः समुद्घोष्यन्ते। यथा—"अहमिन्द्रो न पराजिग्ये", "अहमस्मि महामहः", "अभीदमेकमेको अस्मि निष्षाड्", "अभिभूरहम्", "अग्निरस्मि जन्मना", "तपनोऽस्मि पिशाचानाम्", "अभीषाडस्मि", "अहं सूर्य इवाजनि", अहं स यो नववास्त्वं बृहद्रथं सं वृत्रेव दासं वृत्रहाऽरुजम्", "अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम" इत्यादि।[55]

**स्त्रीकर्त्तव्यानि—**

वेदेषु स्त्रीकर्त्तव्यानामुल्लेखो बाहुल्येन प्राप्यते। अथर्ववेदे स्त्री-कर्त्तव्यानीत्थमुपदिष्टानि · हे स्त्री, त्वं पतिकुले सर्वेभ्यः कल्याण-

---

48- यजु० 17.72, द्र०—द० भा०
49- यजु० 1.8, द्र० — द० भा०
50- यजु० 20 4, द्र०—द० भा०
51- यजु० 13.14, द्र०—द० भा०
52- यजु० 20.1
53- अ० 2.11.1, 4-5
54- अ० 13.2 29; 6-86.2; द्र०—अ० 13.1.34; 19.63.1; 65.1; 20.43.1
55- क्र०—ऋ० 10.48.5, 119.12, 48.7, 166.4; यजु० 18.66; अ० 4.36.6; 12.1.54; 20.115.1; ऋ० 10.49.6; यजु० 18.66

कारिणी भव—"शिवा स्योना पतिलोके विराज", "स्योना भव श्वसुरेभ्यः स्योना पत्ये गृहेभ्यः" "शिवा भव पुरुषेभ्यो गोभ्यो अश्वेभ्यः शिवा।"[56] त्वं वीरपुत्रान् जनय—"आ वीरोऽत्र जायतां पुत्रस्ते दशमास्यः", "पुमांसं पुत्रं जनय।"[57] गवादिपशून् पालय—"पशून् यमिनि पोषय।"[58] स्वगृहे तादृशमाचर येन त्वं रोगाकुला मा भवेः—"स्वे क्षेत्रे अनमीवा विराज।"[59] पतिव्रतधर्ममाचरन्ती सुखं प्राप्नुहि—"पत्युरनुव्रता भूत्वा संनह्यस्वामृताय कम्।"[60] अग्निहोत्रं कुरु—"उपसीदाग्निम्।"[61] अतिथीन् सत्कुरु—"प्रति-भूषेह देवान्।"[62] शतायुष्यप्राप्तये प्रबुद्धा जागरूका च भव—'प्रबुध्यस्व सुबुधा बुध्यमाना दीर्घायुत्वाय शतशारदाय।"[63] स्वगृहे गृहपत्नीरूपेण विराज—"अस्मिन् गृहे गार्हपत्याय जागृहि", त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य" इत्यादि।[64]

अन्यशास्त्रेष्वपि स्त्रीकर्त्तव्यानि विशदतयोपदिष्टानि। मन्वनु-सारं स्त्रिया प्रसन्नवदनया, गृहकर्मचतुरया, सुशोधितगृहपात्रया, व्ययेऽ-मुक्तहस्तया च भवितव्यम्।[65] याज्ञवल्क्यमते पतिप्रियकर्मतत्परा, सदाचारिणी, विजितेन्द्रिया च स्त्री लोके प्रख्यातिमाप्नोति।[66] तन्मते—भर्तृवचनानुगामित्वमेव स्त्रियाः परमो धर्मः—"स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।"[67] व्यासमते—भार्यया पत्युश्छायेवानुगतया, स्वच्छया, हितकर्मसु सखया, आदिष्टकर्मसु च दास्या भवितव्यम्।[68] स्त्रियाः सम्पूर्णदिनचर्याविषयेऽपि व्यासेन विस्तरेण प्रतिपादितम्।[69]

56- अ० 14.1.64; 2.27; 3.28.3
57- अ० 3.23.2-3
58- अ० 3.28.4
59- अ० 11.1.22
60- अ० 14.1.42
61- अ० 14.2.24
62- अ० 14.2.25
63- अ० 14.2.75
64- अ० 14.1.21, 43
65- मनु० 5.150; तु०—या० स्मृ० 1.83
66- या० स्मृ० 1.87
67- तदेव 1.77
68- व्या० स्मृ० 2.27; तु०—पद्म पु०, सृ० खं० 47.56
69- द्र०—व्या० स्मृ० अ० 2

स्त्रियाः वर्जितकर्माण्यपि शास्त्रेषूपलभ्यन्ते। मनुमते—मद्यपानं, दुर्जनसंसर्गः, भर्त्रा सह विरहः, इतस्ततो भ्रमणम्, अकालस्वापः, परगृहनिवासः, इत्येतानि षट् नारीणां संदूषणानि विद्यन्ते।[70] व्यासमते—स्त्रिया उच्चवादिन्या, परुषभाषिण्या, बहुप्रलापिन्या, कलहकारिण्या, प्रलापविलापिन्या, अमौनिन्या, अनधोमुखया, चक्षुष्पाणिपद्भिश्चञ्चलया च नैव भवितव्यम्।[71] शङ्खोऽपि स्त्रीभ्यो वर्जितकर्त्तव्यान्येवमुपदिशति—"नानुक्ता निर्गच्छेत्, नानुत्तरीया। न त्वरितं व्रजेत्। न परपुरुषमभिभाषेतान्यत्रवणिक्प्रव्रजितवृद्धवैद्येभ्यः। न नाभिं दर्शयेत्। आगुल्फाद्वासः परिदध्यात्। न स्तनौ विवृतौ कुर्यात्। न हसेदनपावृता। भर्त्तारं तद्बन्धून् वा न द्विष्यात्। न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलाभिः सहैकत्र तिष्ठेत्। संसर्गेण हि कुलस्त्रीणां चारित्र्यं दुष्यति।"[72]

स्वामिदयानन्देनापि स्त्रियाः कर्त्तव्यविषये स्वग्रन्थेषु बहुत्र लिखितम्। यजुर्भाष्ये संक्षेपेण स्त्रीकर्त्तव्यमित्थं वर्णितम्—"गृहकृत्यकुशलया स्त्रिया सर्वाण्यन्तर्गृहकृत्यानि स्वाधीनानि रक्षित्वा यथावदुन्नेयानि" इति।[73]

**गृहस्थकर्त्तव्यानि—**

वेदे गृहस्थकर्त्तव्येषु सदाचारः, सत्सङ्गः, स्वाध्यायः, सत्यभाषणं पारस्परिकस्नेहः, दानम्, अतिथिसेवा इत्यादीनि कर्त्तव्यानि विशेषेण परिगणितानि।[74] अथर्ववेदे प्रोक्तम्—"यद्यद् जाया पचति त्वत् परः परः पतिर्वा जाये त्वत् तिरः। सं तत् सृजेथां सह वां तदस्तु सम्पादयन्तौ सह

70- मनु० 9.13

71- व्या० स्मृ० 2.33,39

72- द्र०—याज्ञ० स्मृतेः 1.87 तमश्लोकस्य मिताक्षरावृत्तावुल्लिखितम् शङ्खमतम्।

73- यजु० 11.62; विस्तरेण स्त्रीकर्त्तव्यविषये द्र० द० भा०, ऋ० 1.113.8, 14; 123.5-6; 126.7; 164.41; 2.17.7; 3.61.1; 4.52.6,7; 66.5; 79.6; 6.61.7; 64.2; 7.56.7; यजु० 11.71

74- गृहस्थकर्त्तव्यविषये द्र०– द० भा०, ऋ० 1.50.2; 56.4; 62.8; 113.3,17; 117.20; 4.16.10; 5.61.9; 6.22.6; यजु० 6.34; 36; 11.39,64,73,75; 35.5

लोकमेकम् ।।"[75] अभिप्रायः— जाया पतिर्वा परस्परं संगोप्य यत् अर्जयतः तदनुचितम् । उभयोरप्युपार्जितम् एकीभूतं तिष्ठेदित्यर्थः । अन्यकर्त्तव्याकर्त्तव्यान्यधिकृत्य तत्र प्रतिपादितम्—"शतहस्त समाहर सहस्रहस्त संकिर", "श्रेष्ठा भूयास्थ", "त्वमगदश्चर", "उच्च तिष्ठ महते सौभगाय", "मा क्रुधः", "मैतं पन्थामनुगा भीम एष तम एष पुरुष मा प्रपत्थाः" इत्यादि ।[76]

मनुस्मृतावपि गृहस्थकर्त्तव्यानि विस्तरेणोल्लिखितानि यानि महर्षिणापि संस्कारविधौ सत्यार्थप्रकाशे च वर्णितानि । मनुमते गृहस्थो वेदोक्तं स्वाश्रमयोग्यञ्च कर्म कुर्याद्येन स परमां गतिं लभेत् । शास्त्रविरुद्धेन कर्मणा धनं नेहेत । रूपरसगन्धशब्दस्पर्शादीन्द्रियार्थेषु नातिप्रसज्ज्येत । सुखमूलं सन्तोषमालम्ब्य संयतो भवेत् । नित्यं स्वाध्यायमधीयीत । बुद्धिवृद्धिकराणि शास्त्राणि वेदार्थविबोधकान्निगमांश्च नित्यं पर्यालोचयेत् । आत्मानं नावमन्येत । सत्यं, यथार्थं, प्रियकरं च वाक्यं ब्रूयात् । सत्यमप्यप्रियं प्रियमप्यनृतञ्च न वदेत् । भद्रमेव सदा कथयेत् । केनचित् सह निष्प्रयोजनं वैरं विवादञ्च न कुर्यात् । वृद्धान् अभिवादयेत् । अतिथिसत्कारं यथाशक्ति सम्पादयेत, परं वेदविरुद्धमतधारिणः पाखण्डिनः कुत्सितवृत्तिजीविनो बैडालव्रतिकान् वकवृत्तींश्च जनान् वाणीमात्रेणापि न पूजयेत् । ये तु वेदविद्याव्रतस्नातकाः श्रोत्रिया धार्मिकाश्च जना विद्यन्ते तानेवार्चयेत् ।[77] पञ्चमहायज्ञान् प्रत्यहं कुर्वीत ।[78] शास्त्रविहितधर्ममनुतिष्ठन् धनाद्यभावेन कष्टमनुभवन्नपि अधर्मे कदाचिन्मनो न निवेशयेत् । यतोऽधर्मेण वर्धितोऽपि जनः समयं प्राप्य समूलं विनश्यति ।[79] धर्मविरोधिनावर्थकामौ परित्यज्य सर्वप्राणिनामहिंसया शनैः शनैः धर्मं संचिनुयात् ।[80] पाणिपादनेत्रवाक्चपलः कुटिलः परद्रोही च नैव भवेत् ।[81] दशलक्षणकं धर्मं प्रयत्नेन

75- अ० 12.3.39
76- क्र०—अ० 3.24.5; 18.4.86; 4.17.8; 2.6.2; 11.2.20; 8.1.10; द्र०—डा० रामनाथवेदालंकारकृते 'वैदिक सूक्तियां" इत्याख्ये संग्रहे उद्वोधनकर्त्तव्यप्रेरणादिप्रकरणानि ।
77- मनु० 4.11- 9, 137-39, 154, 29-31; द्र०—सं० वि०, पृ० 254-55, स० प्र०, पृ० 141
78- मनु० 4.21, 3.70, 81; द्र०—स० प्र०, पृ० 142-43
79- मनु० 4.171-74
80- मनु० द्र०—4.176,238,242
81- मनु० 4.177

सेवेत। केनापि मूल्येन धर्मं न हापयेत्। यतो हतो धर्मो हन्तारमेव हन्ति।[82]

महाभारतकारेणापि धर्मपालनविषये प्रोक्तम्—न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः। धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः॥[83] दक्षानुसारं सर्वदा सत्क्रियायुक्त एव गृहस्थो गृहीत्युच्यते। यथोक्तम्—"गृहस्थोऽपि क्रियायुक्तो न गृहेण गृही भवेत्। तथैव पुत्रदारैश्च स्वकर्मपरिवर्जितः॥" इति।[84]

गृहस्थकर्त्तव्यविषये धर्मसूत्रेष्वपि बहूपदिष्टम्। गृहस्थाः ब्राह्मण-क्षत्रियवैश्यशूद्रवर्णभेदेन चतुर्विधाः भवन्ति। चतुर्णां वर्णानां पृथक् पृथक् कर्माणि कर्त्तव्यरूपेण तेषु प्रतिपादितानि। बौधायनोऽत्र संक्षेपेणैवमाह—"ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै॥ क्षत्रे बलमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै॥ विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै॥ शूद्रेषु पूर्वेषां परिचर्या॥" इति।[85] गौतमधर्मसूत्रेऽपि चतुर्वर्णानां कर्माणि विस्तरेण प्रतिपादितानि।[86] अन्यकर्त्तव्यविषयेऽपि तत्र बहूक्तम्।[87] आपस्तम्बधर्मसूत्रमपि गृहस्थकर्माणि विस्तरेण वर्णयति।[88]

स्वामिदयानन्देन स्वग्रन्थेषु गृहस्थकर्त्तव्यविषये बहु प्रतिपादितम्। वेदभाष्ये प्रोक्तम्—"यथा रात्रिदिवसौ परस्परं संहतौ वर्त्तेते तथैव स्त्रीपुरुषौ वर्त्तेयाताम्।" यत् स्त्रियाः स्वं तत् पुरुषस्य यत् पुरुषस्य तत् स्त्रिया भवतु नात्र कथंचिद् द्वेषो विधेयः किन्तु परस्परं मिलित्वाऽऽनन्दं भुञ्जीयाताम्। परस्त्रीपुरुषैः सह व्यभिचारं सर्वथा विहाय विवाहिताः स्वस्वस्त्रीपुरुषा ऋतुगामिन एव स्युः। परस्परमप्यत्यन्तं विषयभोग-लोलुपवीर्यक्षयाः कदाचिन्न विधेयाः किन्तु सदर्त्तुगामिनौ सन्तौ दश

---

82- मनु० 6.91,92; 8.15; द्र० - सं० वि०, पृ० 262

83- म० भा०, उद्योगपर्व 40.11-12; द्र०—सं० वि०, पृ० 265

84- द० स्मृ० 2.61

85- बौ० ध० 1.10.2–5

86- गौ० ध० 2.1.1-69

87- द्र०—गौ० ध०, प्र० 1 अ० 5 सू० 6-9; प्र० 2 अ० 1

88- द्र०—आप० ध० 1.7.21.5-10; प्र० 2 पटल 1,2

सन्तानानुत्पाद्य तान् सुशिक्ष्य ऐश्वर्यमुन्नीय प्रीत्या रमेताम् ।"[89]
"गृहाश्रमिणः स्वेष्टमित्रबन्धुजनादीनाहूय यथायोग्यं सत्कारेण भोजनादिना प्रसादयेयुरन्योन्यमुपदेशं शास्त्रार्थं विद्यावाग्विलासं च कुर्युः ।[90]

# 5- नित्यनैमित्तिककर्त्तव्यानि

संस्कारविधौ गृहाश्रमप्रकरणे गृहस्थस्य नैत्यिककर्त्तव्यानि विशदतया प्रतिपादितानि । तत्र प्रोक्तम्–स्त्रीपुरुषौ सर्वदा रात्रौ दशवादने शयीयाताम्, अन्तिमप्रहरे चतुर्वादने वोत्थाय परमेश्वरं ध्यात्वा धर्मार्थौ चिन्तयेताम् । सर्वप्रथमम् "ओं प्रातरग्निं प्रातरिन्द्रं हवामहे" इत्यादिभिः पञ्चभिर्मन्त्रैरीश्वरं प्रार्थयित्वा शौचदन्तधावनस्नानादिकं संपादयेताम् ।[91] तत्पश्चात् पञ्चमहायज्ञान् यथाविधि प्रतिदिनं कुर्याताम् । एतद्व्यतिरिक्तं पक्षेष्टिनवशस्येष्टिसंवत्सरेष्ट्यादिनैमित्तिकयज्ञांश्चापि यथासमयं सविधिविधानमाचरेताम् ।[92] धर्मार्थयोरनुष्ठाने च कामं महत्कष्टमपि भवेत्तथापि धर्मयुक्तपुरुषार्थं न कदापि परित्यजेताम् । शरीरात्मरक्षार्थं सर्वदा युक्ताहारविहारमोषधिसेवनं सुपथ्यञ्च कुर्याताम् ।[93]

मनुस्मृतावपि प्रतिपादितम्–ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ।। ऋषियज्ञं देवयज्ञं भूतयज्ञं च सर्वदा । नृयज्ञं पितृयज्ञं च यथाशक्ति न हापयेत् ।।[94] मनुमते– यो न यजते स उच्छ्वसन्नपि मृत एवेति गण्यते । यश्च यजते स सकलचराचरं बिभर्त्ति । सूर्योदये सूर्यास्तमिते च य ईश्वरं न ध्यायति स शूद्रवद् बहिष्कार्यो भवति ।[95]

---

89- द्र०–ऋ० 2.31.5; यजु० 11.74; ऋ० 1.50.3; यजु० 8.1 मन्त्राणां दयानन्दभाष्यम् ।

90- यजु० 8.12 द० भा०

91- द्र०—सं० वि०, पृ० 222-35; तु०—मनु० 4.25

92- तदेव, पृ० 235-37; तु०—मनु० 4.26

93- तदेव, पृ० 222

94- मनु० 4.92,21; द्र०—3.70-71,81,84; याज्ञ० स्मृ० 1.102, गीता 4.31

95- मनु० 3.72,75; 2.103; द्र०—द० स्मृ० 2.26

गृहस्थस्य नित्यनैमित्तिककर्त्तव्यविषयेऽन्यत्रापि प्रतिपादितम् ।[96] विष्णोरनुसारं धर्मसाधनानि श्रौतानि स्मार्तानि च यान्यपि कर्माणि तानि सर्वाणि गृहस्थेन सम्पादनीयानि, अन्यथा स दोषभाग् भवति ।[97] तन्मते—मनुष्येण प्रत्यहमुत्थाय सुकृतकरणविषये चिन्तनीयम् । यथोक्तम्—उत्थायोत्थाय बौद्धव्यं किमद्य सुकृतं कृतम् । दत्तं वा दापितं वाऽपि वाक् सत्या वाऽभिभाषिता ॥ यस्यां रात्र्यां व्यतीतायां न किञ्चिच्छुभमाचरेत् । तमेव बन्ध्यं दिवसमिति विद्याद्विचक्षणः ॥ इति ।[98]

इत्थं गृहस्थेन धर्मयुक्तानि कर्त्तव्यानि सन्ध्योपासनादीनि च प्रत्यहं करणीयानि भवन्ति, येन स आभ्युदयिकं नैःश्रेयसञ्च सुखं समश्नुते ।

## 6- वेदेषु आदर्शगृहाश्रमचित्रणम्

वेदा गृहाश्रमस्य विभिन्नान् आदर्शान् प्रतिपादयन्ति । वेदेषु गृहनिर्माणविधिः, गृहसमृद्धिः, गृहस्थजनानां पारस्परिकव्यवहारा इत्यादयो विषया विस्तरेण वर्णिताः । गृहनिर्माणविधिः अथर्ववेदीय-नवममण्डलस्य तृतीयसूक्ते लभ्यते । तदनुसारं गृहैः उपमितैः परिमितैः सुनद्धैरवकाशयुतैर्वायुगमनागमनयोग्यैरकष्टकरैश्च भवितव्यम् ।[99] एषु गृहेषु पूर्णैश्वर्यधनसम्पत्तिभिरपि भाव्यम् । यथोक्तम्—इहैव ध्रुवा प्रतितिष्ठ शालेऽश्वावती गोमती सूनृतावती । ऊर्जस्वती घृतवती पयस्वत्युच्छ्रयस्व महते सौभगाय ॥[100] अस्माकं गृहेषु कुमाराः तरुणाः शिशवश्च सन्तु, घृतकुम्भाः दधिकलशाश्च प्राचुर्येण भरिता भवन्तु ।[101] गवाद्याः पशवः,

96- द्र०—द० स्मृ० अ० 2; वि० स्मृ० अ० 2; हा० स्मृ० अ० 11.85; वेदव्यास स्मृ० अ० 2.20, अ० 3; गौ० ध०, पृ० 1 अ० 5,9; आप० ध० 1.4.12.14; बौधा० ध० 2.6.1-7; आ० गृ० 3.1; गो० स्मृ० 2.25; श० स्मृ० अ० 5; बौधा० स्मृ० प्र० 2 अ० 6; म० भा० 12.241.15; व० ध० 5.8; 8.17

97- वि० स्मृ० 2.18

98- वैद्यनाथदीक्षितीयस्मृतिमुक्ताफलस्याह्निककाण्डादुद्धृतम्, पृ० 210

99- द्र०—सं० वि०, पृ० 238-41

100- अ० 3.12.2

101- अ० 3.12.3, 7, 8

सेवकाद्याः पुरुषाः, धान्यवृद्धिश्च मम गृहं सम्यक् प्राप्नुवन्तु ।[102] मम गृहाः सुखस्य भावयितारोऽन्नरसवन्तः पयस्वन्तः कमनीयेनैश्वर्येण पूर्णाश्च सन्तु ।[103] न कश्चिदपि गृहजनः क्षुधितः पिपासितश्च कष्टमाप्नुयात्—"अक्षुध्या अतृष्या स्त गृहा" इति ।[104] गृहसमृद्धिसूचका मन्त्राः वेदेषु बहुशो लभ्यन्ते ।[105] निम्नमन्त्रा गृहस्थस्य स्वर्गत्वं वर्णयन्ति—"घृतह्लदा मधुकूलाः सुरोदकाः क्षीरेण पूर्णा उदकेन दध्ना । एतास्त्वा धारा उपयन्तु सर्वाः स्वर्गे लोके मधुमत् पिन्वमानाः । उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः ॥ यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः । अश्लोणा अङ्गैरह्रुताः स्वर्गे तत्र पश्येम पितरौ च पुत्रान् ॥"[106]

गृहस्थाश्रमे सर्वैर्जनैः स्नेहभावेन वस्तव्यमिति वेदा उपदिशन्ति । यथा—"अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्या ।" इति ।[107] तनयो जनकस्यानुकूलकर्मा मात्रा सह च समनस्को भवतु—"अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः । जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ॥"[108] किंच "मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा । सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥" "ज्यायस्वन्तश्चित्तिनो मा वियौष्ट सं राधयन्तः सधुराश्चरन्तः । अन्यो अन्यस्मै वल्गु वदन्त एत···॥" "इहेमाविन्द्र संनुद चक्रवाकेव दम्पती ।" "क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वस्तकौ ॥"[109] इत्यादयो मन्त्रा अपि गृहस्थस्यादर्शं चित्रयन्ति ।

## 7- गृहाश्रमस्यावधिः

वेदेषु स्मृतिषु शास्त्रेषु धर्मसूत्रेषु स्वामिदयानन्दादिप्रणीतार्षग्रन्थेषु च चत्वार आश्रमा वर्णिताः । वेदेष्वनेके संकेता एतादृशा विद्यन्ते यैर्गृहस्थाश्रमसेवनतः पश्चात् वानप्रस्थाश्रमसेवनं समर्थितं भवति । अथर्ववेदीयब्रह्मचर्यसूक्ते प्रतिपादितं यद् आचार्यः प्रथमे वयसि

102- अ० 2.26.3; द्र० 2.26.1-2, 4-5
103- अ० 7.60.2
104- अ० 7.60.4
105- द्र०—अ० 7.60.5-6; 7.34.1, 10.6.35; इत्यादयः ।
106- अ० 4.34.6; 6.120.3; द्र०—अ० 14.2.43
107- अ० 3.30.1
108- अ० 3.30.2
109- अ० 3.30.3,5; 14.2.64, 1.22

विद्यामधीत्य ब्रह्मचारी भवति, द्वितीये स प्रजापतिः (गृहस्थो) भवति, तृतीये विराट् (वानप्रस्थाश्रमी) भवति, चतुर्थे च विराड् वशी इन्द्रः (तेजस्वी जितेन्द्रियः संन्यासी) भवति—"आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः। प्रजापतिर्विराजति विराडिन्द्रोऽभवद् वशी" इति।[110]

ऋग्वेदे प्रार्थितम् यद् हे इन्द्र, चतुराश्रमधारकं पुत्रमस्मभ्यं त्वं देहि—"स्वायुधं स्ववसं सुनीथं चतुःसमुद्रं धरुणं रयीणाम्। चर्कृत्यं शंस्यं भूरिवारमस्मभ्यं चित्रं वृषणं रयिं दाः॥"[111] यः चतुरः समुद्रान् स्वयशसा व्याप्नोति स चतुःसमुद्रस्तं तादृशं रयिं पुत्रमित्यर्थः।[112] समुद्रशब्दोऽत्राश्रमवाचकः। यथोक्तमन्यत्र—"स सद्य एति पूर्वस्मादुत्तरं समुद्रम्" इति।[113] स ब्रह्मचारी पूर्वस्मात् ब्रह्मचर्याश्रमरूपात् समुद्राद् उत्तरं समुद्रं गृहस्थाश्रमं प्रति एति गच्छतीत्यर्थः। "तपोऽतिष्ठद् तप्यमानः समुद्रे।"[114] समुद्रे ब्रह्मचर्याश्रमे स ब्रह्मचारी तपः अतिष्ठद् अकार्षीदित्यर्थः। किञ्च "भगस्ततक्ष चतुरः पादान् भगस्ततक्ष चत्वार्युष्पलानि"[115], "एकं वि चक्रचमसं चतुर्वयम्"[116] इत्यादिप्रमाणैरपि चतुराश्रमाः सिद्ध्यन्ति।

आश्रमव्यवस्थायाः पुनरुज्जीवकेन महर्षिदयानन्देनापि सत्यार्थप्रकाशस्य तृतीयचतुर्थपञ्चमसमुल्लासेषु संस्कारविधेर्गृहाश्रमप्रकरणे च विविधवेदब्राह्मणोपनिषत्स्मृतिप्रमाणपुरस्सरं चतुराश्रमव्यवस्था प्रदर्शिता।

चतुर्णामाश्रमाणां समयविभागाज्ज्ञायते यत् पञ्चविंशतिवर्षाणि गृहस्थेन सेव्यन्ते। शतायुर्वै पुरुष इति लोके प्रसिद्धम्। मनुस्मृतौ चतुराश्रमाणां समयविभागः प्राप्यते। तत्रोक्तम्—नरः स्वायुषश्चतुर्थभागं गुरुकुले ब्रह्मचर्यसेवने व्यतीयात्। अनन्तरं द्वितीयं चतुर्भागात्मकमायुः कृतविवाहो जायया सह गृहे निवसन् यापयेत्। ततश्च यदा

110- अ० 11.5.16

111- ऋ० 10.47.2

112- द्र०—सा० भा०

113- अ० 11.5.6

114- अ० 11.5.26

115- अ० 14.1.60; अत्र द्र०—सत्यव्रतसिद्धान्तालंकारप्रणीता संस्कारचन्द्रिका, पृ० 379

116- ऋ० 4.36.4; हे ऋभवो मेधाविनः यूयम् एकम् आयुष्याख्यं चमसं चतुर्वयं चतुराश्रमरूपचतुःशाखं वि चक्र व्यकार्ष्ट इत्यर्थः।

पुत्रस्यापत्यं जायेत तदा वनी भूत्वाऽरण्यं समीयात् ।[117] स्वामिदयानन्देनाप्युक्तं यन्नरो विवाहद्वारा पुत्रमुत्पाद्य, तत्पुत्रोऽपि यदा पूर्णंब्रह्मचर्यं समाप्य विवहेत् पुत्रञ्चोत्पादयेत्तदा वानप्रस्थाश्रमी स्यात् ।[117] एवं समयविभागानुसारमायुषो द्वितीयभाग एव गृहस्थाश्रमः सेव्यते, तृतीयभागे वानप्रस्थाश्रमश्चतुर्थे संन्यासश्च । यथोक्तम् — "वनेषु च विहृत्यैवं तृतीयं भागमायुषः । चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्" इति ।[119]

## 8- वेदेषु नारीणां स्थितिः

स्वामिदयानन्दस्याविर्भावात् पूर्वं नारीणां विषये न केवलमविदुषामपितु केषाञ्चन विदुषामपि वेदविरुद्धानि मतान्यासन् । संस्कृतपण्डिताः मिथ्यावचनानि प्रकल्प्य मुकुलितनयना उद्घोषितवन्तः— "स्त्रीशूद्रौ नाधीयाताम्" इति । शङ्कराचार्यं एवमजूघुषत् - "द्वारं किमेकं नरकस्य नारी" इति । वेदभाष्यकारः सायणोऽपि निम्नशब्दैः स्त्रीणामध्ययनमरुणत् —"स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षायाम् उपनयनाभावेन अध्ययनराहित्याद् वेदेऽधिकारः प्रतिबद्धः ।"[120] कैश्चित् प्रोक्तम् — "आवर्तः संशयानामविनयभवनं पत्तनं साहसानाम्, दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् । दुर्ग्राह्यं यन्महद्भिर्नरकुलवृषभैः सर्वमायाकरण्डम् स्त्रीयन्त्रं केन लोके विषममृतयुतं धर्मनाशाय सृष्टम् ।।", "यदि जिह्वा सहस्रं स्याज्जीवेच्च शरदां शतम् । अनन्यकर्मा स्त्रीदोषाननुक्त्वा निधनं व्रजेत् ।" इति । पुराणेष्वपि क्वचन स्त्रीनिन्दा विहिता ।[121]

परं परमकारुणिकेन सदयहृदयेन स्वामिदयानन्देन स्त्रीप्रशंसा, तस्या वेदाध्ययनाध्यापनाधिकारस्तन्माहात्म्यञ्च वेदप्रमाणैः पुनर्विज्ञापितम् ।[122] तेन प्रोक्तम् —वेदेषु नैव कुत्रचिदपि स्त्रीनिन्दा वर्त्ततेऽपितु

117- चतुर्थमायुषो भागमुषित्वाऽऽद्यं गुरौ द्विजः ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ।। मनु० 4.1; द्र० 5.169
गृहस्थस्तु यदा पश्येत् वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ।। मनु० 1.2; द० — शं० स्मृ० 6.1; स० प्र०, पृ० 180; सं० वि०, पृ० 268

118- सं० वि०, पृ० 268; स० प्र०, पृ० 181

119- मनु० 6.33

120- द्र० — तैत्तिरीयसंहितायाः सायणभाष्यभूमिका

121- द्र०—भा० पु० 1.4.25; प० पु० सृष्टि ख० 49.9

122- द्र०— स० प्र०, चतुर्थसमुल्लासः, सं० वि०, गृहाश्रमप्रकरणम्

सर्वत्र स्थले-स्थले नारीप्रशंसा बहुशः पापठ्यते। जननी भगिनी पत्नी पुत्रीति नार्यश्चत्वारो मुख्यभेदा भवन्ति। वेदेषु सर्वासां महिमा वर्णितः। ऋग्वेदे पत्त्येव गृहमस्तीति प्रतिपादितम्—"जायेदस्तम्" इति।[123] वेदपठनाधिकारोऽपि वेदेषूपलभ्यते। यथा—"यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय।……॥", "समानं मन्त्रमभिमन्त्रये वः" इत्यादि।[124] अथर्ववेदे वध्वाः सर्वतो वेदज्ञानस्य संयोगो भवेदिति समभिहितम्—"ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः" [125] ऋग्वेदेऽप्युक्तम्- 'स्त्री हि ब्रह्मा बभूविथ" इति।[126] स्त्रीणां यज्ञाधिकारोऽपि वेदेषु स्पष्टतया वर्णितः। यथा—"यज्ञं दधे सरस्वती", "संहोत्रं स्म पुरा नारी समनं वाव गच्छति", 'शुद्धाः पूता योषितो यज्ञिया इमा" इत्यादि।[127] यजुर्वेदे नारी स्तोतुमर्हा रमणीया स्वीकर्त्तुमर्हा कमनीया आह्लादकारिणी द्युतिमती अदितिः विज्ञा पूज्यतमा बहुश्रुता च भवतीति प्रतिपादितम्।[128] तत्र नारी राष्ट्रधारयित्री वर्णिता "पुरन्धिर्योषा"।[129] वेदानां मते नारी कुलपालयित्री वर्त्तते—"येषा ते कुलपा राजन्"।[130] पुत्रान् जनयन्ती च सा महनीया गण्यते—"सुवाना पुत्रान् महिषी भवाति।"[131] गृहजनेषु सा सम्राज्ञी भवति—"यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा। एवा त्वं सम्राज्ञ्येधि पत्युरस्तं परेत्य॥", "सम्राज्ञ्येधि श्वसुरेषु सम्राज्ञ्युत देवृषु। ननान्दुः सम्राज्ञ्येधि सम्राज्ञ्युत श्वश्र्वाः॥"[132] नारी पत्युः पोष्या भवति।

---

123- ऋ० 3.53.4; तु०—3.53.6; 10.85.27; अ० 14.1.20; 2.75; म० भा० 12.145.6

124- यजु० 26.2, द्र०—द० भा०; ऋ० 10.191.3

125- अ० 14.1.64

126- ऋ० 8.33.19

127- ऋ० 1.3.11; 10.86.10; अ० 11.1.17; 27; द्र०—श० ब्रा० 1.9.2.5; 2.5.1.11; 3.8.2 1-6; 10.2.3.1; तै० ब्रा० 2.2.2.6; 3.3.3.1,5; आ० गृ० 1.8.5; पा० गृ० 1.6; 2.17; हि० गृ० 1.23.3

128- यजु० 8.43

129- यजु० 22.22

130- अ० 1.14.3

131- अ० 2.36.3

132- अ० 14.1.43-44

यथोक्तम्—"ममेयमस्तु पोष्या", "मा व्यथिष्ठा मया सह", "मा हिंसिष्टं कुमार्यम्" इत्यादि।[133] पत्या वधूस्तस्याः सौभगत्वायोह्यते न तु ताडनाय—"गृह्णामि ते सौभगत्वाय हस्तम्"।[134] सा अमृतलोकस्याधिकारिणी विद्यते—"आ रोह सूर्ये अमृतस्य लोकम्"। नारी ऋक्स्थानीया स्वीकृता—"सामाहमस्मि ऋक् त्वम्"।[136] नारी विराड् वर्त्तते—"विराडियं सुप्रजा अत्यजैषीद्"।[137] नारी राज्याधि रिण्यपि भवति। सा राजसभासु न्यायमपि करोति। यथोक्तम्— ह वदामि नेत् त्वं सभायामह त्वं वद" इति।[138] नारी सत्यस्य विधात्री विद्यते—"वेधा ऋतस्य"।[139] सा ज्ञानस्योपदेष्ट्री वर्त्तते—"चोदयन्ती सूनृतानां चेतन्ती सुमतीनाम्", "अहमुग्रा विवाचनी", "त्वं विदथमावदासि" इत्यादि।[140] नारी नावला, किन्तु सा शक्तिमती कथिता—"अवीरामिव मामयं शरारुरभिमन्यते", "उताहमस्मि वीरिणी", "अहमस्मि सहमाना" इत्यादि।[141] अतः पतिः स्वयं तदनुगामित्वं मन्यते—"तामन्वर्तिष्ये सखिभिर्नवग्वैः"।[142]

वसिष्ठधर्मसूत्रे नारीमाहात्म्यविषये प्रोक्तम्—"उपाध्यायाद्दशाचार्याः आचार्याणां शतं पिता। पितुर्दशशतं माता गौरवेणातिरिच्यते॥"[143]

मनुस्मृतावपि नारीमाहात्म्यविषये विशदतया प्रतिपादितम्। तन्मते यत्र नार्यं आद्रियन्ते तत्र देवाः प्रमोदन्ते, यत्र च ता असत्क्रियन्ते तत्र कर्माणि फलवत्त्वं नैव भजन्ते। नार्यः खलु श्रीरूपा गृहदीप्तयश्च भवन्ति। अपत्योत्पादनं, तत्परिपालनं, लोकव्यवहारश्च भार्ययैव सम्यग् विधीयते। धर्मकार्याणि, शुश्रूषा, कामः स्वर्गश्च दाराधीनमेव

133- अ० 14.1.52,48,63
134- अ० 14.1.50
135- अ० 14.1.61
136- अ० 14.2 71
137- अ० 14 2.74
138- अ० 7.39.4; द० – ऋ० 1.126.7; द० भा०
139- ऋ० 10.86.10
140- ऋ० 1.3.11; 10.159.2; 85.26
141- अ० 20.126.9; द्र०—ऋ० 10.86.9; 3.18.5
142- अ० 14.1.56
143- व० ध० 13.48; तु०– मनु० 2.145; या० स्मृ० 1.35; म० भा० 1.196.16; 12.108.18; 266.31

सर्वम् ।[144] व्यासमते यत्र नार्यो हन्यन्ते पापपङ्किलं तद्गृहं भवति। स्त्रीघातका वृन्तात् पक्वं फलमिवाधः पतन्ति। यो भार्यारक्षणेऽसमर्थः स नरकं व्रजति। क्रोधयुतोऽपि नरो नारीणामप्रियं नैव कुर्यात्। यतो गृहिणीहीनं गृहं कान्तारादप्यतिरिच्यते ।[145] भार्यासमो वन्धुर्लोके नान्यः कश्चिद्विद्यते। नारी हि धर्मसंग्रहे सहायिका, दुःखसमये आह्लादिका, विपत्सु मन्त्रयित्री, भोजनकाले च जननीसमा भूत्वा सुखमेवोत्पादयति ।[146] अतस्तत्रोक्तम्—"स्त्रियः श्रियो गृहस्योक्ताः" इति ।[147] किंच "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते। गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥ वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम्। प्रसादोऽपि तया हीनः कान्तारादतिरिच्यते। आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम्। ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाम् ॥"[148] इत्यादयः श्लोका अपि नारीणां सामाजिकस्थितिं स्पष्टतया वर्णयन्ति।

ये खलु सत्स्वप्येतेषु गुणेषु नारीं निन्दन्ति तान् प्रति बृहत्संहितायामुक्तम्—"येऽप्यंगनानां प्रवदन्ति दोषान् वैराग्यमार्गेण गुणान् विहाय। ते दुर्जना मे मनसो वितर्कः सद्भाववाक्यानि न तानि तेषाम् ॥ प्रब्रूत सत्यं कतरोऽङ्गनानां दोषस्तु यो नाचरितो मनुष्यैः। धाष्ट्र्येन पुंभिः प्रमदा निरस्ताः गुणाधिकास्ताः मनुनात्र चोक्तम् ॥ अहो धाष्ट्र्यमसाधूनां निन्दतामनघाः स्त्रियः। मुष्णतामिव चौराणां तिष्ठ तिष्ठेति जल्पताम् ॥" इति ।[149]

"द्वारं किमेकं नरकस्य नारी" इति वाक्यस्योद्घोषकः शंकरोऽपि स्वमातृमरणसमये मात्रे निम्नशब्दैः श्रद्धाञ्जलिमदात्—"आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा, नैरुच्ये तनुशोषणं मलमयी शय्या च सांवत्सरी। एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमो, दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः ॥" इति ।[150]

---

144- मनु० 3.56; 9.26–27; द्र०—3.55,57–62

145- म० भा० 13.127.6; 5.36.61; 14.90.48-49; 1.74.52 12.145.6

146- म० भा० 1.74.41; 12.145.6

147- म० भा० 5.38.11; द्र०—13.46.15

148- म० भा० 12.145.6; 1.74.53

149- बृ० सं० 74.5–6,8

150- द्र०—शंकरदिग्विजयः, अ० 15

स्वामिदयानन्दोऽपि मनुस्मृतिप्रमाणपुरस्सरं नारीगौरवं विशिष्याकीर्त्तयत्।[151] इत्थं वैदिकप्रमाणैः नार्याः स्थितिः सुस्पष्टा भवति।

एवमत्राऽष्टमाध्याये वैदिकगृहस्थाश्रमस्य विभिन्नविषयानधिकृत्य विवेचनपुरस्सरं पर्यालोचितम्। नवमाध्यायेऽस्माभिः संक्षेपेण विषयमुपसंहरद्भिः स्वामिदयानन्दस्य गृहाश्रमविषयकविचाराणां प्रभावः प्रदर्शयिष्यते।

०:—:०

151- द्र—सं० वि०, पृ० 211-13

# नवमोऽध्यायः

## 1- प्रचलितेभ्य इतरविवाहसंस्कारविधिभ्यः स्वामिदयानन्दकृत--विवाहसंस्कारविधेरन्तरं तद्विशेषता च

साम्प्रतं प्रतिसमाजं, प्रतिवर्गं, प्रतिजाति, प्रतिसमुदायञ्च विवाहसंस्कारस्य विभिन्ना विधयः सम्पाद्यन्ते। प्राक्कालेऽपि विवाहविधिषु सर्वथा समत्वं नाभवत्। आश्वलायनगृह्यसूत्रानुसारं विभिन्नानां नगराणां ग्रामाणाञ्च परम्परा नैकविधा भवन्ति।[1] यथा साम्प्रतमपि पुरातनपरम्पराविषये वृद्धस्त्रियः प्रमाणत्वेन मन्यन्ते तथैव आपस्तम्बगृह्यसूत्रकालेऽपि अमन्यन्त।[2] काठकगृह्यसूत्रे[3] पारस्करगृह्यसूत्रे[4] च विवाहविधौ देशकुलाचाराणां पालनस्योल्लेखो विहितः। आसां परम्पराणां कारणाद् विवाहविधयोऽतिविस्तृता जटिलजटिला विभिन्नकर्मकाण्डस्वरूपाश्च संजाताः। लोकाचारप्रचलिता विभिन्नविधयः स्वामिदयानन्देन स्वसंस्कारविधौ न स्वीकृताः। तेष्वधस्तात् केचन वर्ण्यन्ते।

---

1- "अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात्।" आ० गृ० 1.7.1

2- "आवृतश्चास्त्रीभ्यः प्रतीयेरन्", आ० गृ० 2.15, अत्र टीकाकारस्योक्तिः— "आवृतः क्रियाः वैवाहिक्यः अविशेषात् समन्त्रका अमन्त्रकाश्च। तास्सर्वा आस्त्रीभ्यः सर्ववर्णेभ्यस्सकाशादवगम्य प्रतीयेरन् कुर्वीरन् विवोढारः। अमन्त्रकाः नाकबलियक्षबलीन्द्राणीपूजादयः। ताश्च यथाजनपदं यथावर्णं यथाकुलं यथास्त्रीपुंसं व्यवस्थिता एव। न तु सर्वास्सर्वत्र समुच्चिताः॥", तात्पर्यदर्शनटीका।

3- का० गृ० 25.7

4- "ग्रामवचनं च कुर्युः। विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात्। तस्मात्तयोर्ग्रामप्रमाणमिति श्रुतेः।" पा० गृ० 1.8.11–13, द्र० हरिहरभाष्यम्।

**नवग्रहपूजा—**

पौराणिकविवाहविधौ नवग्रहयागः प्रकोपशान्त्यर्थं सम्पाद्यते।[5] अनेन विधिना क्रूरग्रहा नैव प्रकुप्यन्ते, परं ते शान्तिमवाप्य कल्याणमेव विदधतीति पौराणिका मन्वते।[6] स्वामिदयानन्देन विधिरयं विवाहसंस्कारे नैव समुपन्यस्तः। ग्रहाणामचेतनत्वात्तेषां सुखदुःखरूपः प्रभावः स्वामिना स्वग्रन्थेषु निरस्तः। तन्मते सुखदुःखरूपाणां फलानां हेतवः पापपुण्यरूपाणि कर्माणि भवन्ति न तु ग्रहाः।[7]

**गणेशपूजा—**

क्वचन विवाहसंस्कारे गणेशोऽपि पूज्यते।[8] तेषामिदं मतम्—"सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते" इति।[9] अयं पूजाविधिः स्वामिदयानन्देन नाङ्गीकृतः, तन्मते सर्वव्यापकस्य निराकारस्य परमेश्वरस्योपासनयैव यथोचितफलसिद्धेः सत्त्वात्।

**मातृपूजादि—**

पीठे कुङ्कुमादिना गणपतिं षोडशमातृश्च लिखित्वा गोमयेन दूर्वाभिश्च विभूष्य अर्घं संस्थाप्य पूजासंकल्पः क्रियते षोडशमातृणां पूजनं करिष्ये इति। षोडशमातरस्तत्रैवं पठिताः—गौरी, पद्मा, शची, मेधा, सावित्री, विजया, जया, देवसेना, स्वधा, स्वाहा, मातरः, लोकमातरः, धृतिः, पुष्टिः, तुष्टिः, आत्मनः कुलदेवता।[10] एता मातरो विवाहसंस्कारस्यादौ पूज्यन्ते। अयमपि विधिः स्वामिदयानन्देन

---

5- "ततः तत्र संकल्पं ग्रहयागं च कुर्यात्" सं० दी०, भा० 2 पृ० 90

6- "ग्रहाणामुग्रचेष्टानामेतां शान्तिं समाचरेत्।। नित्योऽयं ग्रहयज्ञः स्यात् नैमित्तिक इतः परः। गर्भाधानादिसंस्कारकर्मस्वपि विशेषतः॥ अभिचारे च यः कुर्याद् ग्रहपूजां विधानतः। सोऽभीष्टफलमाप्नोति०॥" श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत्॥" सं० दी०, भा० 1 पृ० 72-73

7- स० प्र०, पृ० 50

8- सं० दी०, भा० 1, पृ० 101

9- तदेव, पृ० 101

10- तदेव, पृ० 110-11

न गृहीतः, यतोहि तन्मते न खल्वनेका लोकमातरः किन्त्वेको जगदीश्वर एव जगतः पिता माता च, यथोक्तं श्रुतौ—"त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ", ऋ० 8.98.11, इति। एवमेव द्वादशाचार्याणां पूजनमित्याद्यपि[11] महर्षिणा व्यर्थाडम्बरमिति कृत्वा परित्यक्तम्। नागपूजनमपि[12] बहुत्र विधीयते। तत्तु महर्षिमते "पयःपानं भुजङ्गानां केवलं विषवर्धनम्" इति न्यायेन व्यर्थमेव।

**कन्यापित्रा वरस्य पादप्रक्षालनम्—**

बहूनां मते विवाहकाले वरस्य पादशोधनं कन्यापित्रा विधीयते। पाद्यार्घ्यादिदानमपि च तद्द्वारा सम्पाद्यते।[13] परं स्वामिदयानन्दानुसारं वराय कन्ययैवार्घ्यादिदानं क्रियते।[14] अनेन विधेः सौन्दर्यं साभिप्रायत्वं च द्योत्यते। विवाहानन्तरं गृहस्थाश्रमे वधूरेव वराय पाद्यादीन् प्रयच्छति। कन्यापिता तु वरेणापि सत्करणीयो भवति। अतो विवाहसंस्कारसमयेऽपि वराय पाद्यादिदानं वध्वैव समुपयुक्तमित्यभ्युपगम्यते।

**वध्वा दक्षिणाङ्गित्वम्—**

विवाहसंस्कारारम्भे कन्या वरस्य दक्षिणभागे उपविशति। परं स्वामिदयानन्देतरसंस्कारविधिमनुसृत्य ये पुरोहिता विवाहसंस्कारं कारयन्ति ते सप्तपदीविधेरनन्तरं वध्वा आसनपरिवर्तनं कारयित्वा तां वरस्य वामभागे उपवेशयन्ति। यतो हि "वामाङ्गे च विभाति भूधरसुता" इति न्यायेन पत्नी पत्युर्वामाङ्गिनीति तेषां मतम्। किन्तु स्वामिदयानन्देन स्वसंस्कारविधौ क्वचिदप्यासनपरिवर्तनस्य विधानं न कृतम्। तत्रादितो विवाहविधिसमाप्तिपर्यन्तं वधूर्वरस्य दक्षिणभाग एवोपविशति। पतिगृहप्रयाणकाले रथारोहणे, पतिगृहे सम्पद्यमाने यज्ञे चापि सा दक्षिणमेव स्थितिं कुरुते।

इत्थं लोकाचारे विभिन्नविधयः प्राचुर्येण प्रचलिताः यान् स्वामिदयानन्दः स्वमतविरुद्धत्वाद् वा व्यर्थाडम्बरत्वाद् वा प्रमाणविरहितत्वाद् वा नाङ्गीचकार। अद्यत्वे स्वामिदयानन्दीय-संस्कारविधेः

---

11- विवाहपद्धतिः, पृ० 27

12- तदेव, पृ० 19

13- तदेव, पृ० 7,31

14- सं० वि०, पृ० 155–59

प्रचलनमुत्तरोत्तरं वर्धते, तस्य प्रमाणसंवलितत्वात्, सरलत्वात्, चित्ताकर्षकत्वाच्च। संक्षेपप्रियाः केचन तस्यापि संक्षेपमिच्छन्ति, संक्षिप्यैव च तं कुर्वन्ति कारयन्ति च।

## 2- स्वामिदयानन्दस्य गृहाश्रमविषयकविचाराणां समाजे प्रभावः

स्वामिदयानन्दः संस्कारविध्यादिषु स्वप्रणीतग्रन्थेषु गृहाश्रमविषये विविधविचारान् अलिखदिति पुरस्ताद् दर्शितम्। अत्र विषयमुपसंहरद्भिः स्वामिनो गृहाश्रमविषयकविचाराणां समाजे कः प्रभावः इति संक्षेपेण किंचिल्लिख्यते।

**बालविवाहनिषेधः—**

स्वामिदयानन्देन सत्यार्थप्रकाशे बालविवाहप्रथाया महती निन्दा कृता। वैदिकप्रमाणैश्च युवविवाहं संपोषयता विवाहयोग्यमायुः कन्यायाः षोडशवर्षतश्चतुर्विंशवर्षपर्यन्तं वरस्य च पञ्चविंशवर्षादष्टचत्वारिंशवर्षपर्यन्तं निर्धारितम्। "अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी। दशवर्षा भवेत् कन्या तत ऊर्ध्वं रजस्वला" इत्यादीनि कपोलकल्पितानि मिथ्यावचनानि खण्डयित्वा युक्तियुक्तं सप्रमाणं युवविवाहमतं प्रतिष्ठापयता तेन लिखितम्—यस्मिन् देशे ब्रह्मचर्यविद्याग्रहणादिरहिता बाल्यविवाहा अयोग्यविवाहाश्च भवन्ति स देशो दुःखाम्भसि निमज्जति।[15]

महर्षेरुपर्युक्तविचारस्य प्रभावः समाजे द्रुतगत्याऽजायत। मध्ययुगात् 1800 तमे ईसवीयाब्दपर्यन्तं बालविवाहप्रथा प्राचुर्येण बभूव। तदानीमष्टवर्षीयाणां कन्यानां परिणयोऽजायत। बहुत्र पितरौ बालकबालिकयोर्जन्मनः प्रागेव तयोर्वाग्दानं चक्रतुः। परिणामस्तस्य भीषणोऽभवत्। बाल्ये विवाहकरणाद् निर्बलान्यपत्यान्यजायन्त, विधवावृद्धिः सतीप्रथा इत्याद्या दुष्परिणामाश्च प्रादुरभूवन्। अपरिपक्वावस्थायां विवाहकरणस्य दोषान् निरीक्षमाणाः समाजसुधारका बालविवाहप्रथाविरोधे सक्ष्वेडमजूघुषन्। समाजसुधारकाणामान्दोलनस्य प्रभावात् 1870 तम ईसवीयाब्दे भारतीयदण्डसंहितायां कन्याया विवाहयोग्यमायुः दशवर्षमितं सर्वकारेण स्वीकृतम्। परमिदमायुरपि विवाहस्यायोग्यमभवत्। 1890 तमे ईसवीयाऽब्दे एका दशवर्षीया "फूलमणि दास"

15- द्र०—स० प्र० पृ० 118, 124

इत्यभिधेया कन्या स्वपत्या सह सहवासकारणेन मृत्युमवाप। ततो विवाहयोग्यमायुः द्वादशवर्षदेशीयत्वं भवेदिति 1891 तमे ईसवीयाब्दे सर्वकारेण नूतननियमो निरमायि। इदमप्यायुर्विवाहार्थमल्पमासीत्। अतो विवाहार्थमायुःसीमानिर्धारणाय समाजसुधारका विभिन्नतया प्रायतन्त। "सहवासायुःसमितेर्निर्माणं" (Age of consent committee); "बाल-विवाह-निषेधक-विधानस्वीकरणम्" (Child marriage Rostraint act); इत्यादयः प्रतिषेधका उपाया अवलम्बिताः।

परिणामतः 1929 तमे ईसवीयाब्दे "शारदा-विधानं" (Sharada act) पारितं, यदनुसारं बालकस्य विवाहयोग्यमायुर्न्यूनान्न्यूनमष्टादश-वर्षत्वं बालिकायाश्च चतुर्दशवर्षत्वं केन्द्रीयविधानसभया नियमितम्। पुनः 1949 तमे ईसवीयाब्दे कन्याया विवाहयोग्यमायुः संशोध्य पञ्च-दशवर्षत्वं कृतम्। 1976 तमे ईसवीयाब्दे च बालकस्य विवाहयोग्य-मायुरेकविंशतिवर्षत्वं कन्यायाश्चाष्टदशवर्षत्वं निश्चितम्।

क्रियात्मकरूपेणापि साम्प्रतं समाजे प्रायशः पूर्णयुवावस्थायामेव विवाहाः क्रियन्ते कार्यन्ते च।

**स्वयंवरविवाहः—**

स्वामिदयानन्देन वेदभाष्ये सत्यार्थप्रकाशे च स्वयंवरविवाह-प्रणाली सर्वोत्तमत्वेन स्वीकृता।[16] अस्याः प्रथाया व्यवहारो वर्त्तमान-समये बाहुल्येन दृश्यते। श्रीमत्या हाटेमहोदयायाः गवेषणानुसारं साम्प्रतं प्रतिशतं 74 कन्याः स्वयंवरप्रणाल्या स्वविवाहं चिकीर्षन्ति।[17] सम्बन्धिनः स्वसन्तानानां विवाहसम्बन्धनिश्चयकरणात् पूर्वं तेषां पर-स्परं दर्शनं गुणकर्मस्वभावपरीक्षणं स्वीकृतिं चानिवार्यत्वेन मन्यन्ते।

**अन्तर्जातीयविवाहः (गुणकर्मस्वभावानुसारं विवाहः)—**

गुणकर्मस्वभावानुसारमेव विवाहः श्रेष्ठो भवतीति स्वामिदयानन्दः प्रोक्तवान्। "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्। क्षत्रियाज्जातमेवं तु विद्याद् वैश्यात्तथैव च" इति मनुस्मृतिप्रमाणपुरस्सरं तेन स्वमतं प्रति-ष्ठापितम्। तन्मते ब्राह्मणादिकुलोत्पन्नो नरोऽन्यकुलोत्पन्नां स्त्रियं गुण-कर्मस्वभावानुसारं वोढुमर्हति।[18] इयं साम्प्रतमन्तर्जातीयविवाहप्रथेति

16- द्र० – स० प्र०, पृ० 121–22, 135

17- हिन्दू परिवार मीमांसा, पृ० 624

18- स० प्र०, पृ० 129–30

कथ्यते । अस्याः प्रचारः प्रसारश्च शनैः शनैर्भारतवर्षे वर्धते । सर्वकारोऽपि विशेषसुविधाप्रदानद्वारा प्रथामिमां प्रोत्साहयति ।

**विधवाविवाहः—**

सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे युगपद्बहुविवाह निषेधयता स्वामिदयानन्देनाक्षतयोनिस्त्रिया अक्षतवीर्यपुरुषस्य च पुनर्विवाहः प्रतिपादितः ।[19] विधवायाः कुमारपुरुषेण, विधुरपुरुषस्य च कुमार्या सह विवाहं प्रतिषेधयता तेन विधवाविधुरयोः परस्परनियोगविधिस्तत्र प्रदर्शितः ।[20] नियोगप्रथायां विधवाया सह विधुरपुरुषस्य सन्तानोत्पत्त्यर्थमेव सहवासो भवति, न तयोराजीवनं दम्पतीत्वं सम्पद्यते ।[21] सत्यार्थप्रकाशे यद्यपि विधवाविवाहप्रथा द्विजेभ्यः कर्त्तव्यरूपेण नैवोल्लिखिता तथापि स्वामिदयानन्दः पूनाप्रवचने इत्थमगादीत्—विधवाविवाहं ये खण्डयन्ति तेषां समर्थनं नाहं चिकीर्षामि । परमिदमवश्यं कथयामि यद् ईश्वरसृष्टौ स्त्रीपुरुषौ समौ स्तः । पुरुषेभ्यः पुनर्विवाहस्याज्ञा दीयते चेत्, स्त्रियः पुनर्विवाहार्थं कुतो निवार्यन्ते ?[22]

आर्यसमाजेन देशकालपरिस्थितिपरम्परानुसारं नियोगप्रथास्थाने विधवाविवाहविषये विशेषेण प्रयत्नो विहितः । परिणामतः साम्प्रतं भारतवर्षे विधवाविधुरयोर्विवाहा बहुत्र भवन्ति ।

**स्त्रीशिक्षाप्रचलनम्—**

स्वामिदयानन्देन गृहाश्रमस्योन्नतये स्त्रीशिक्षाया अनिवार्यत्वमपि स्वप्रणीतग्रन्थेषु प्रतिपादितम् । "स्त्रीशूद्रो नाधीयाताम्" इत्यादीनि वेदविरुद्धवचनानि प्रत्याख्याय "यथेमां वाचं कल्याणीम्०", "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्", "इमं मन्त्रं पत्नी पठेद्" इत्यादि श्रुतिस्मृत्यादिप्रमाणपुरस्सरं महर्षिणा स्त्रीशिक्षाया आवश्यकता स्पष्टतया वर्णिता ।[23] स्त्रीशिक्षाप्रसारार्थायंसमाजो महदान्दोलनमकार्षीत् । तत्प्र-

---

19- स० प्र०, पृ० 162–63

20- स० प्र०, पृ० 167–68

21- स० प्र०, पृ० 164–65

22- पूनाप्रवचन, पृ० 126; अ० 18.3.2-3 "अपश्यं युवतिं नीयमानां जीवां मृतेभ्यः परिणीयमानाम् ।", "उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।"

23- स० प्र० पृ० 109-10

भावेण 1883 तमे ईसवीयाब्दे वर्त्तमानभारतस्यैका नारी विश्वविद्यालयस्य प्रथमा स्नातिका बभूव। साम्प्रतं नारीशिक्षा सर्वत्र प्रचलिता। विद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु च कन्याभिरपि विद्या अधीयते। स्वामिनः शिक्षामनुसृज्य कन्यानां गुरुकुलान्यपि भारतवर्षे यत्र तत्रार्यसमाजेन प्रस्थापितानि यानि कन्याशिक्षाविषये बहुलमुपकुर्वन्ति।

**स्त्रीणां प्रशासनाधिकारः—**

स्त्री पुरुषवत् प्रशासनकर्मणोऽप्यधिकारिणी वर्त्तत इति स्वामिदयानन्दस्य मतम्।[24] अस्य विचारस्य प्रभावेण प्रशासनक्षेत्रे स्त्रीणां यद्गौरवपूर्णं स्थानं साम्प्रतं विद्यते तन्न कस्यापि तिरोहितम्। सर्वा वयस्कस्त्रियः प्रशासनाधिकारिणां निर्वाचने प्रत्याशिन्यो मतदानाधिकारिण्यश्च विद्यन्त इति प्रत्यक्षम्। कार्यमेतत् श्रीमतीसरोजिनीनायडूमहाभागायाः प्रयत्नेन सिद्धम्। सर्वप्रथमं तस्या अध्यक्षतायां स्त्रीणां शिष्टमण्डलेनैकेन 1917 तमे ईसवीयाब्दे ब्रिटिशलोकसभायाः सम्मुखमेतद्विषयकं याचनापत्रं समुपस्थापितम्। 1919 तमे ईसवीयाब्दे ब्रिटिशलोकसभया स्त्रीणां मतदानाधिकारविषयः प्रान्तीयव्यवस्थापिकापरिषद्भ्यः समर्पितः। 1926 तमे ईसवीयाब्दे च स्त्रियः सर्वप्रथमं मद्रासप्रदेशे निर्वाचिका अभवन्। अन्ते च सर्वत्र भारतदेशस्यान्यप्रदेशेष्वपि स्त्रीभिर्मतदानाधिकारोऽलभ्यत। स्वतन्त्रभारते तु नार्यो विशिष्टं सम्मान्या अभूवन्। श्रीमतीसरोजिनीनायडूः भारते सर्वप्रथमा महिला राज्यपालिका (गवर्नर) बभूव, श्रीमतीविजयलक्ष्मीपण्डिता 1947–49 ईसवीयाब्दे मास्कोनगर्यां 1949–52 ईसवीयाब्दे च वाशिंगटननगर्यां प्रथमा भारतीया राजदूती अभूत्। अन्या अपि महिलाः साम्प्रतं नगरपालिका-न्यायपालिका-विधानसभा-संसदादिषु प्रतिष्ठितं पदं भजन्ते। श्रीमती इन्दिरा गान्धी बहुवर्षं यावद् भारतस्य प्रधानमन्त्रित्वमलञ्चकार।

इत्थमनेन संक्षिप्तविवेचनेन स्पष्टं यद् गृहस्थाश्रमविषये महर्षिदयानन्दस्य विचारैः पर्याप्तं समाजे राष्ट्रे च पदं लब्धम्, तच्च तत्कृते गौरवास्पदमेव।

---

24- ऋ० 1.126.7, द० भा० 1

# 3- गृहस्थाश्रमस्य काश्चन सामयिकसमस्याः

**सन्तानसंख्या—**

वर्त्तमानसमये बहुषु देशेषु विशेषतो भारते देशे जनसख्यावृद्धिविषये महती चिन्ता प्रवर्त्तते। साम्प्रतिकपरिस्थितिषु राष्ट्रे जनसंख्यावृद्धेरनपेक्षितत्वाद् सर्वकारो जनसंख्यामल्पीकर्तुं विशिष्टं प्रयतते। एतदर्थं तदीयः परिवारनियोजनकार्यक्रमः सुप्रसिद्धः। दम्पती द्वावेव सन्तानावुत्पादयेतामिति तस्योद्घोषः। इमं कार्यक्रमं सफलीकर्तुं स सर्वथा जनान् प्रोत्साहयति, गर्भनिरोधकोपायांश्च प्रज्ञाप्य धनादिनाऽपि जनान् पुरस्करोति। तेनेयं स्वाभाविकी जिज्ञासा उत्पद्यते—किमु दम्पत्योर्द्वावेव सन्तानौ भवेताम् यद्वाऽधिकाः, वेदाश्चैतद्विषये किं समामनन्ति ?

वेदेषु क्वचिद् एकवचनेन क्वचिच्च बहुवचनेन पुत्रप्राप्तेः कामना सूचिता, येन सन्तानसंख्याविषये संकेतोऽवाप्यते। यथा—"विन्दस्व त्वं पुत्रं नारि यस्तुभ्यं शमसद्", "पुमांसं पुत्रं जनय", "मर्यादे पुत्रमाधेहि", "यथा पुत्रं जनादिति", "अदुष्टे देवाः पुत्रं सोमपा उभयाविनम्", "पुमांसं पुत्रमाधेहि", "सुज्येष्ठ्यो भवत् पुत्रस्त एषः", इत्येकवचनान्तम्।[25] "भवासि पुत्राणां माता", "सुवाना पुत्रान् महिषी भवाति", "पुत्राणां नो असः पिता", "रयिश्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्", इति बहुवचनान्तः।[26] एतैः प्रमाणैः सन्तानसंख्या कियती स्यादिति निर्णेतुं नैव शक्यते। तथाप्येतत्तु सूच्यत एव यदावश्यकताऽनुसारम् एकौ द्वौ बहवो वा पुत्रा उत्पादयितव्या इति। ऋग्वेदे प्रोक्तम्—"इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु। दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि"।[27] अनेनाधिकाधिकं दशपुत्रा जनयितव्या इति सूचितं भवति। परं दशपुत्रा सर्वैरुत्पादनीया एवेति नैषोऽभिप्रायः। यदि कश्चित् सेचनसमर्थः शक्तिशाली ऐश्वर्यवांश्च वर्त्तते स एव सत्यां राष्ट्रस्यावश्यकतायां दशपुत्रान् जनयेदिति भावः। ततोऽप्यधिकसन्तानोत्पादने तदीया शारीरिकहानिः सम्भाव्यते।

स्वामिदयानन्देनापि सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे उक्तवेदमन्त्रमुद्धृत्येत्थं प्रोक्तम्—दम्पतीभ्यां गृहस्थजीवनेऽधिकादधिकं

25- अ० 3.23.5; 3.33.3; 6.81.2,3; 5.25.9.11-13; 14.2.24.

26- अ० 3.23.3; 2.36.3; 6.131.3; ऋ० 10.85.41

27- ऋ० 10.85.45

दशपुत्रा एवोत्पादनीया नाधिकाः, यतो ह्येवमकरणे सन्ताना निर्बला निर्बुद्धयश्च जायन्ते, स्त्रीपुरुषावपि बलहीनौ बुद्धिरहितौ रुग्णौ सद्योमृतिभाजौ च भवतः। इयमेव वेदनिर्दिष्टा चरमसीमा।

किञ्च, ऋग्वेदे 10.47 सूक्ते प्रतिमन्त्रम्—"अस्मभ्यं चित्रं वृषणं रयिं दाः" इति वाक्यसमापनेन साकं पुत्रः प्रार्थ्यते। हे इन्द्र, त्वमस्मभ्यं स्वायुधं, सुरक्षकं, सुमार्गदर्शकं, चतुराश्रममर्यादापालकं, धनवन्तं, क्रियाशीलं, प्रशंसनीयं, बहुभिर्वरणीयं, सुब्रह्माणं, देववन्तं, बृहन्तम्, उरुं, गभीरं, पृथुमस्तिष्कं, श्रुतऋषिम्, उग्रम्, अभिमातिषाहं, अन्नदानशीलं, विप्रवीरं, तरुत्रं, धनदं, सुसमृद्धं, सुदक्षं, दस्युहनं, पूर्भिदं, सत्यम्, अश्ववन्तं, रथिनं, वीरवन्तं, शतिनं, सहस्रिणं, भद्रव्रातं, सुखदं, सप्तगुम्, ऋतधीतिं, सुमेधां, बृहस्पतिं, चित्रं, वृषणं, पुत्रं देहीति तत्र गृहस्थस्य प्रार्थना। अनेन विविधगुणसहितस्यैकस्यैव पुत्रस्य याचना परिलक्ष्यते न तु गुणरहितानामधिकपुत्राणाम्। बहुप्रजविषये तु वेदे प्रोक्तम्—"बहुप्रजा निर्ऋतिमाविवेश", ऋ० 1.164.32, बहुपुत्रवान् कृच्छ्रापत्तिं महत्कष्टं समश्नुत इत्यर्थः। इत्थं वैदिकदृष्टिर्गुणमभीप्सति, न तु संख्याम्। अतो व्यक्तेः समाजस्य राष्ट्रस्य चावश्यकतानुसारं सन्ताना उत्पादनीया चरमसीमा च दश, इति फलितोऽर्थः।

**विवाहविच्छेदः—**

पाश्चात्यदेशेषु विवाहविच्छेदः परां काष्ठां प्राप्तः। तत्र सामान्यकारणेऽपि सति सहसा विवाहो विच्छिद्यते। पश्चिमसभ्यतायाः प्रभावः साम्प्रतं भारतीयपरिवारेष्वपि क्वचिद् दृश्यते। गार्हस्थ्यमहत्त्वज्ञानहीनाः कामोद्वेगपरतन्त्राः प्रेमविवाहबन्धनाबद्धाः भौतिकवादिनो युवानः शीघ्रमेव विधिपूर्वकमविधिपूर्वकं वा विवाहं विच्छिद्य इतस्ततश्चङ्क्रम्यमाणा दन्द्रम्यमाणाश्च दरीदृश्यन्ते। न ते दम्पत्योः कर्त्तव्यं बुद्ध्यन्ते। सामान्यकारणवशात् स्वहस्तेनैव स्वस्मिन् कुठारप्रहारमाचरन्तो निजभाग्यमेवोपालभ्य रुदन्ति। तदत्र विवाहविच्छेदविषये वेदानां स्मृतिकाराणाञ्च किं मतमिति संक्षेपेण प्रोच्यते।

वेदेषु न क्वचिदपि विवाहविच्छेदः समर्थितः। तत्र स्थले स्थले पतिपत्न्योरविरोधस्यैवोपदेशः कृतः। जायापतीभ्यां सर्वदा सहकर्मभावनयैव वस्तव्यमिति वेदानामभिप्रायः। यथोक्तम्—"इहैव स्तं मा वियौष्टं विश्वमायुर्व्यश्नुतम्", "प्रजयैनौ स्वस्तको विश्वमायुर्व्यश्नुताम्",

"ज्यायस्वन्तश्चित्तिनो मा वियौष्ट", इत्यादि ।[28] किञ्च, "येन देवा न वियन्ति नो च विद्विषते मिथः । तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः ॥" इति वैदिकी प्रेरणा ।[29] येन देवाः स्त्रीपुरुषाः न वियन्ति न पृथग् भवन्ति, विवाहविच्छेदं न कुर्वन्तीत्यभिप्रायः । अन्यत्र प्राथ्यंते—"यथाखरो मघवंश्चारुरेष प्रियो मृगाणां सुषदा बभूव । एवा भगस्य जुष्टेयमस्तु नारी सं प्रिया पत्याऽविराधयन्ती ॥" इति ।[30] हे मघवन् परमैश्वर्यंवन्, एष चारुः अतिरमणीयः, आखरः आखन्यते इति आखरः कन्दरः, यथा मृगाणां गुहाशायिनां पशूनां, प्रियः अनुकूलः, सुषदा सुखेन स्थातुं योग्यः स्थानविशेषो वर्त्तते, एव तथैव, इयं प्रिया प्रियतमा, नारी पत्नी, पत्या भर्त्रा, अविराधयन्ती न पृथग् भवन्ती, विवाहविच्छेदमकुर्वन्ती, भगस्य पत्युः, संजुष्टा सम्यगुपभुक्ता, अस्तु भवत्वित्यर्थः । 'प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करम्"[31] इत्यादि प्रमाणजातान्यपि वरवध्वोर्विवाहविच्छेदं निषेधयन्ति ।

मनुनाऽपि विवाहविच्छेदो निषिद्धः । तन्मते—साध्वीनां स्त्रीणां द्वितीयो भर्त्ता न कश्चिदपीतरो जनः सम्भवति—"न द्वितीयश्च साध्वीनां कश्चिद् भर्तोपदिश्यते ।" इति ।[32] कन्या सम्पूर्णजीवन एकवारमेवोह्यते—"सकृत् कन्या प्रदीयते" इति ।[33]

आपस्तम्बेनाऽपि प्रोक्तम्—"जायापत्योर्न विभागो विद्यते । पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च ।" इति ।[34] अन्यत्राऽपि प्राप्यते—"भार्याया व्यभिचारिण्याः परित्यागो न विद्यते । दद्यात् पिण्डं कुचेलं च अधःशय्यां च शाययेत् ॥" इति ।[35] "यस्य नोपरता भार्या देहार्धं तस्य जीवति । जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात्" इति ।[36] 'एक एव पतिर्नार्या

28- ऋ० 10.85.42; अ० 14.2.64; 3.30.5

29- अ० 3.3.4

30- अ० 2 36.4

31- ऋ० 10.85.25; अ० 14.1.18

32- मनु० 9 162

33- मनु० 9.47

34- आप० ध० 2.14.16-19

35- स्मृ० चं०, पृ० 242, हारीतमतम् ।

36- अपरार्क 2.135, [illegible]

यावज्जीवं परायणम् । मृते जीवति वा तस्मिन्नापरं प्राप्नुयात् पतिम् ॥" इति ।[37]

प्राक्तनैर्महर्षिभिः स्मृतिकारैर्देशकालपरिस्थित्यनुसारं विषयममुमधिकृत्य कारणवशात् क्वचिद् सम्बन्धविच्छेदस्य विधानं प्रोक्तम्, परन्तु तत् सम्पूर्णविवाहविच्छेदस्य कोटौ न समायाति । मनुरत्राह— यदि स्त्री मद्यपा, दुराचारशीला, प्रतिकूलव्यवहर्त्री, आमयपीडिता, हिंसापरा, धनापव्ययिनी च भवेत्तदानीं पतिस्तस्यां जीवन्त्यामपि द्वितीयां स्त्रियं विवहेत्—मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत् । व्याधिता वाऽधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा ॥" इति ।[38] यदि च स्त्री वन्ध्यतया सन्तानहीना तदाऽष्टमे वर्षे, यदि मृतपुत्रा तदा नवमे वर्षे, यदि कन्याजनयित्री तदैकादशे वर्षे, यदि चाप्रियवादिनी तदा तत्कालमेव पतिर्द्वितीयां स्त्रियमुद्वहेत् - "वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा । एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी" इति ।[39] एवं सत्यपि पूर्वा स्त्री पत्या निर्वासनयोग्या न भवति, अपितु तेन सा भर्त्तव्याऽस्तीति स्मृतिकाराणां मतम् । याज्ञवल्क्यमते यद्यपि सुरापी, व्याधिता, धूर्ता, वन्ध्या, अर्थघ्नी, अप्रियंवदा, स्त्रीप्रसूः, पुरुषद्वेषिणी च स्त्री अधिवेत्तव्या भवति तथापि सा पत्या भर्तव्या, एवमकरणे तन्मते महदपुण्यं भवति—सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा । स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥ अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ॥ इति ।[40]

किञ्च, सत्यपि व्याधितत्वस्त्रीप्रजत्ववन्ध्यत्वादिकारणे देवलः अदुष्टायाः सर्वथा विवाहविच्छेदं न मन्यते—"व्याधितां स्त्रीप्रजां वन्ध्यामुन्मत्तां विगतार्त्तवाम् । अदुष्टां लभते त्यक्तुं तीर्थन्नित्वेव कर्मणः ॥"[41]

अन्यत्र क्वचित् सदोषायाः स्त्रियाः निर्वासनं परित्यागो वा प्रोक्तः—

स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनीं तथा ।
भर्त्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेत् गृहात् ॥

---

37- म० भा०, आदिपर्व० 104.35

38- मनु० 9.80

39- मनु० 9.81

40- याज्ञ० स्मृ० 1.73-74

41- द्र० —देवलः, अप० 1.73

अनर्थशीलां सततं तथैवाप्रियवादिनीम् ।
पूर्वाशिनी च या भर्त्तुः तां स्त्रीं निर्वासयेत् गृहात् ॥
स्वच्छन्दव्यभिचारिण्या विवस्वांस्त्यागमब्रवीत् ।
न वधं न च वैरूप्यं बन्धं स्त्रीणां विवर्जयेत् ॥[42]

एतन्निर्वासनमपि न वैधानिकविवाहविच्छेदसंज्ञां लब्धुं पारयति । पत्या सा स्वेच्छया गृहान्निर्वासिता, पश्चात् तां प्रत्यावर्तयितुमपि शक्नोति, न तत्र काचिद् वैधानिकबाधा ।

नारदस्मृतौ नारीणां पत्यन्तरकरणस्य पञ्च आपदः परिगणिताः– "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥"[43] अत्रेदं सांशयिकं यत् "पतिरन्यो विधीयते" इत्यनेन नियोगस्य विधानं यद्वा जीवन्तं पूर्वं पतिं परित्यज्य पुनर्विवाहोऽभीष्टः । स्वामिदयानन्देन श्लोकोऽयमप्रामाणिकः प्रोक्तः ।[44] स च विवाहविच्छेदं न समर्थयति, प्रत्युत दम्पत्योः श्रुत्युक्तम् आदर्शजीवनं भवेद् येन परस्परं कलहो न स्यादित्येव तस्य भावना ।

तथापि वर्तमानं भारतीयसंविधानं कासुचित् परिस्थितिषु विवाहविच्छेदमनुमोदयति, न्यायालयाच्चापि तत्स्वीकृतिरधिगन्तुं शक्यते, यथा द्वयोरन्यतरस्य व्यभिचारित्वे, धर्मपरिवर्तने, उन्माददशायाम्, असाध्यकुष्ठरोगाक्रान्तत्वे, रतिरोगपीडितत्वे, संन्यस्तत्वे । विवाहविच्छेदः अतोऽप्यधिकं सुकरः स्यादित्येषोऽप्युद्घोषः कर्णगोचरी क्रियते यदा कदा । सत्यमेतद् यन्मानवः खलु परिस्थितीनां दासः, इतरदेशेषु या परम्परा यद् विधानं वा तदपि प्रभावयति जनान् । परम् इतरदेशानामनुभवो न विवाहविच्छेदस्य स्वच्छन्दतायाः पक्षेऽस्ति । तद्देशीयाः साम्प्रतं विवाहविच्छेदाद् उद्वेजिता इव प्रतीयन्ते । ते तत्र किमपि नियन्त्रणं वाञ्छन्ति । अतो भारतेऽप्येतद्विषयेऽधिका स्वतन्त्रता न देया ।

**यौतक-प्रथा—**

साम्प्रतं विवाहेन सम्बद्धासु प्रमुखसमस्यासु एका "दहेज" इत्याख्या यौतकप्रथा वर्त्तते यया पारिवारिकजीवनं व्याकुलीकृतम् । इयं

---

42- ना० स्मृ० 15.93.95; विवादरत्नाकरः, पृ० 426

43- ना० स्मृ० 13.99

44- द्र०—स० प्र०, समु० 4

परिवारेषु समाजे च सम्प्रत्यतिजटिला गहना च। वराय कन्यापक्षेण दीयमानं धनं यौतकमिति निगद्यते। इयं यौतकपरम्परा "अमरबेल" इति प्रसिद्धा व्रततिर्विद्यते या स्वाधारमेव प्रशोष्य पल्लवति। आर्थिक-विषमताया इयं प्रमुखजननी। पुत्रीवतः पितुर्दारिद्र्यस्य दुश्चिन्ताया-श्चेयमेव प्रमुखहेतुः। विलम्बिविवाहानां, वृद्धविवाहानां, विषमायुष्क-विवाहानाञ्चापीयमेव कारणम्। अस्याः कारणेन बह्व्यः कन्याः कौमार्यजीवनमेवाङ्गीकुर्वन्ति। विवाहिताश्च श्वश्रूश्वसुरभर्त्रादिपीडिता आत्मानमेव घ्नन्ति। यौतकभयेन समाजे कन्या जाता एव हन्यन्ते, यद्वा कन्याजननाद् दुःखमेवानुभूयते। पारस्परिककलहस्य अवैधानिक-विवाहविच्छेदस्य चापि हेतुरियम्। अत एव बौधायनः प्राह—"क्रीता द्रव्येण या नारी सा न पत्नी विधीयते। सा न दैवे न सा पित्र्ये दासीं तां कवयो विदुः॥ शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः। पतन्ति नरके घोरे घ्नन्ति चासप्तमात् कुलात्" ॥ इति।[45] यौतकप्रथा खलु धर्मरूपे पावनतमे विवाहसंस्कारे चन्द्रकलङ्क इव क्रयविक्रयरूपो व्यवसाय एव।

स्वामिदयानन्देन मन्वनुसारं ब्राह्मदैवार्षप्राजापत्याख्याश्चत्वारो विवाहप्रकाराः श्रेष्ठत्वेन परिगणिताः। एतेषु विवाहेषु न किमपि वस्तु दीयते स्वीक्रियते वा। ब्राह्मे विवाहे कन्या केवलं वस्त्रादिभिरलङ्क्रियते। दैवेऽपि कन्याया अलङ्करणमात्रमेव। आर्षे प्रत्युत वरपक्षादेवैकं गोमिथुनं द्वे वाऽऽदाय कन्यादानं क्रियते—"एकं गोमिथुनं द्वे वा वरादादाय धर्मतः" इति।[46] प्राजापत्ये च वराभ्यर्चनपूर्वकमेव कन्यादानं विहितम्। यौतकपुरस्सरो विवाहस्तु "आसुर" एव यत्र ज्ञातिभ्यो पुष्कलं द्रविणं प्रदीयते—"ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः॥" इति।[47] "आसुरो द्रविणादानाद्", "वित्तेनाऽऽनतिः स्त्रीमतामासुरः" इत्यादि।[48] एष चासुरो विवाहो निन्द्येषु परिगणितः। अतो मनुमते स्वामिदयानन्दस्य च मते विवाहे यौतकमग्राह्यमेव।

ऋग्वेदे यदा सूर्या स्वकीयं पतिगृहमगच्छत् तदा तया सह न किञ्चिद् भौतिकं धनादिरूपं यौतकमासीत्, किन्तु रैभी ऋग् एव अनु-देयी वधूविनोदनाय अनुदीयमाना सखी आसीत्। नाराशंसी स्तुतिकर्त्री

45- बौ० गृ० 1.11.20-1

46- मनु० 3.29

47- मनु० 3.31

48- याज्ञ० स्मृ० 1.61; गौ० ध० 4.9

ऋग् न्योचनी वधूशुश्रुषार्थं दीयमाना दासी अभवत्। सूर्यायाः स्वकीयं यद्भद्रं पुण्यं कर्म यशो वा तदेव वासः अभवत्, तच्च गाथया देवतानां कीर्तिगानैः परिष्कृतं सुशोभितमभूत्। चित्तिः जागरूकता चेतना वा, तस्या उपबर्हणम् उपधानमासीत्। चक्षुः ज्ञानचक्षुः दिव्यदृष्टिर्वा अभ्यञ्जनम् शृङ्गारसाधनमासीत्। द्यौर्भूमिश्च कोशः द्रव्याधानपेटिका आसीत्।[49] तथापि मयाऽस्मिन् विवाहे हिरण्यरजतादिकं किमपि बहुमूल्यं द्रव्यं न प्राप्स्यते इति जानन्नपि सोमरूपो वरो वधूकामोऽभवत्—"सोमो वधूयुरभवत्" इति।[50] नापि तेन न वा तत्पित्रादिभिरुक्तं यद् द्रविणाभावे वयं सूर्यां न ग्रहीष्याम इति। इत्थं वैदिकप्रमाणेनेदमेव सिद्ध्यति यद्विवाहकाले कन्यया सह सद्गुणैरेव यौतकत्वेन भवितव्यम्, न बाह्येन केनापि द्रव्येण।

परम् अस्त्यत्र द्वितीयोऽपि पक्षः। ऋग्वेदे कासुचिद् दानस्तुतिषु कश्चिद् राजा वध्वा सार्धं रथगवादिकं प्रयच्छति, तदपि यौतकमेव? यथा चायमानोऽभ्यावर्ती राजा रथसहितान् वधूमतः द्वयान् मिथुनभूतान् विंशतिं गाः प्रयच्छति।[51] देववतो राज्ञः पैजवनः सुदाः राजा गवां द्वे शते, वधूसंयुक्तौ द्वौ रथौ हिरण्यालङ्कारवतश्चतुरोऽश्वांश्च ददाति।[52] एतेन सूच्यते यद् राजानः केषाञ्चिन्निर्धनानां सत्पात्राणां कयाचिद् योग्यया कन्यया विवाहं कारयित्वा द्रव्यादिनापि तत्साहाय्यं कुर्युः। तथा च सति यौतकप्रथा वेदानुमोदिता जायते। अथ च सूर्याविवाहस्य पूर्वोक्तप्रसङ्गेनापि यौतकस्य पुष्टिरेव जायते, न निषेधः, यतो हि तत्र कन्यया सह कन्यापित्रा दीयमानानां वस्तूनामुल्लेखो विद्यते। किंच तस्मिन्नेव सूक्ते समागतं "सूर्याया वहतुः प्रागात् सविता यमवासृजत्, ऋग् 10.85.13" इति मन्त्रं व्याचक्षाणः सायणो ब्रूते "कन्याप्रियार्थं दातव्यो गवादिपदार्थो वहतुः" इति। तेनापि ज्ञायते यत् कन्यया साकं कस्यचिदल्पमूल्यस्य बहुमूल्यस्य वा द्रव्यस्य दानं न वैदिकदृष्ट्या प्रतिषिद्धम्।

---

49- रैभ्यासीदनुदेयी नाराशंसी न्योचनी।
सूर्याया भद्रमिद् वासो गाथयैति परिष्कृतम्॥
चित्तिरा उपबर्हणं चक्षुरा अभ्यञ्जनम्।
द्यौर्भूमिः कोश आसीद् यदयात् सूर्या पतिम्॥ ऋ० 10.85.6,7

50- ऋ० 10.85.9

51- ऋग् 6.28.8

52- ऋ० 7.18.22,23

उभयोः पक्षयोरिदं सामञ्जस्यं भवितुमर्हति यत् स्वेच्छया यदि कन्यापिता किमपि द्रव्यं प्रयच्छति तर्हि नास्ति दोषः। परं यत्र वर-पक्षेण द्रव्यं याच्यते कन्यापक्षीयैश्च तद्द्रव्यदानेऽसमर्थैरपि येन केनापि प्रकारेण ऋणं वा गृहीत्वा सर्वस्वं वा हुत्वा तद् दीयते तत्रैव दोष इति। परं वर्तमानसमाजे यद्यस्य स्वीकृतिर्दीयते तर्हि प्रच्छन्नरूपेण दोषावहा यौतकप्रथा बद्धमूला भविष्यति। तदुच्छेदनार्थमेतदावश्यकं यदेतादृशा दृढ़संकल्पा युवानः सज्जीभवेयुर्ये यौतकं सर्वथा न गृह्णीयुः। ये कन्यायाः पितरो वा भ्रातरो वा समर्थास्ते विवाहानन्तरं यथावसरं द्रव्यादिना साहाय्यं कर्तुं शक्नुवन्ति। ये चासमर्थास्तेषां कृते भारो न भविष्यति।

## 4- समापनम्

इत्थं नवाध्यायेषु विवाहगृहाश्रमविषयकविचाराः सम्यक्तया समुपन्यस्ताः। संस्कारशब्दस्यार्थः प्रदर्शितः। गर्भाधानाद्या अन्त्येष्ट्यन्ताः षोडशसंस्काराः प्रमाणपुरस्सरं प्रतिपादिताः। तेषां संस्काराणां वेदमूलत्वमपि विज्ञापितम्। गृह्यसूत्रेष्वितरप्रमुखग्रन्थेषु च वर्णितान् संस्कारान् प्रदर्श्य स्वामिदयानन्देनाभिमताः संस्कारा अपि यथायथं समाम्नाताः। संस्काराणां महत्त्वं प्रतिपाद्य संस्कारविधौ विवाहगृहाश्रमप्रकरणयोः पठिता विषयाः, स्वामिदयानन्दप्रणीतेष्वितरग्रन्थेषु चोल्लिखिता विवाहगृहाश्रमविषयकविचारा उल्लासिताः। अथ च स्वामिदयानन्दरचितसंस्कारविधेः प्रामाणिकतां प्रदर्श्य तन्निर्माणकालोऽपि ज्ञापितः।

विवाहशब्दस्यार्थं निरूप्य धर्मशास्त्रेषु विवाहस्य महत्त्वं प्रोक्तम्। विवाहस्य कः कालः, का आयुःसीमा, कति भेदा इति जिज्ञासा समाहिता। वरवध्वोर्विवाहयोग्यता, सापिण्ड्यविचारणा, वरणपद्धतिश्च समालोचिता। वाग्दानविधिरूपपादितः। प्रमुखगृह्यसूत्रान्तर्गताः विवाहसंस्कारस्य विधयः, संस्कारविधौ स्वीकृताः विधयश्च संकलिताः।

विवाहसंस्कारात् प्राग् वरवध्वोः स्वस्वगृहेषु विधेया विधयः प्रतिपादिताः, विवाहसंस्कारतः प्राक् कर्त्तव्या सज्जा अपि प्रस्तुता। प्रारम्भिकविधिषु सत्कारविधिः, गोदान-कन्यादान-वस्त्रधारण-समञ्जनादिविधयश्च पर्यालोचिताः।

विवाहयज्ञसमारम्भमुपवर्ण्य प्रधानहोमे राष्ट्रभृद्-होमः, जयाहोमः, अभ्यातानहोमः, अन्ये च होमाः व्याख्याताः। पाणिग्रहण-शिलारोहण-

लाजाहुति-कुण्डप्रदक्षिणा-केशमोचन-ग्रन्थिबन्धन-सप्तपदी-मस्तिष्कजल-सेचन-सूर्यावलोकन-हृदयस्पर्श-वधूदर्शन-आशीर्वादप्रदानविधयः समाख्याताः। उत्तरविधौ प्रधानहोम-ध्रुवदर्शन-अरुन्धतीदर्शन-वधूमस्तक-स्पर्श-भक्तभक्षणादिविधयः समुद्घाटिताः। वध्वा गृहप्रयाणं, तत्र स्वागतं च वर्णितं, वरगृहे करणीया विधयोऽपि चर्चिताः।

गृहाश्रमस्य वैदिकादर्शप्रस्तावे गृहाश्रमस्य महत्त्वम्, एकपत्नीत्वम्, अन्योन्यमपरित्यागः, गृहस्थस्त्रीपुरुषाणामाचाराः, नित्यनैमित्तिक-कर्तव्यानि, आदर्शगृहाश्रमचित्रणं, गृहाश्रमावधिः, नारीणां स्थितिः—एतत् सर्वं विचारविषयीकृतम्।

उपसंहारे स्वामिदयानन्दस्य गृहाश्रमविषयकविचाराणां समाजे प्रभावोऽपि ख्यापितः। इतरविवाहसंस्कारविधिभ्यः स्वामिदयानन्दकृत-विवाहसंस्कारविधेरन्तरं तद्विशेषता चोपपादिता। अन्ते च सन्तान-संख्या, विवाहविच्छेदः, यौतकप्रथा—इति गृहस्थाश्रमस्य विकटाः सामयिकसमस्याः समाश्रित्य शास्त्रीयो लौकिकश्च विचारः पल्लवितः।

प्रबन्धेऽस्मिन् विवाहसंस्कारस्य सर्वे विषयः समाविष्टाः। वैदिक-संहिता गृह्यसूत्राणि चैतद्विषये या याः सामग्रीः प्रस्तुवन्ति तास्ताः सर्वा अपि संगृहीताः। विवाहसंस्कारान्तर्गतानां सर्वेषामेव विधीनां सार्थ-कत्वं साभिप्रायत्वञ्च तत्तद्विधिप्रयुक्तमन्त्राद्याधारेण मीमांसितम्। सैद्धान्तिकविषयेषु महर्षिदयानन्दोद्धृतप्रमाणातिरिक्तमितरशास्त्रीय-प्रमाणान्यपि प्रमाणत्वेनोपस्थापितानि। एतद्विषये यत्र कुत्रचिच्छा-स्त्रीयविप्रतिपत्तिः साऽपि प्रदत्ता। विवाहगृहाश्रमप्रकरणान्तर्गते कस्मिन्नपि विषये सत्यार्थप्रकाशे, ऋग्वेदादिभाष्यभूमिकायां, वेदभाष्ये, इतरेषु वा केषुचिन्महर्षिप्रणीतेषु ग्रन्थेषु ये केऽपि नूतना विचाराः समुपलब्धास्तेऽपि सव्याख्यानं संकीलिताः। सुविस्तृतोऽपि विषयः संक्षिप्य निरूपितः।

अवसरं प्राप्य महर्षिदयानन्दकृतसंस्कारविधौ वर्णितानितरानपि संस्कारान् अनया दिशा व्याख्यातुं मे समीहा विद्यते।

इति शुभं भूयात्।

०:—:०

# सहायक-ग्रन्थसूची

**वैदिकसंहिताः**

**अथर्ववेदसंहिता**

1. सायणभाष्यम्, वि० वै० शो० सं० होशिआरपुरम्, वि० 2018
2. जयदेवशर्मविद्यालंकारभाष्यम्, आर्यसाहित्यमण्डलम्, अजमेरः, वि० 2022
3. श्रीपाददामोदरसातवलेकर-भाष्यम्, स्वाध्यायमण्डलम्, पारडी, वि० 2015
4. पं० क्षेमकरणत्रिवेदिभाष्यम्, दयानन्दसंस्थानम्, नई दिल्ली, वि० 2021

**ऋग्वेदसंहिता**

5. स्वामिदयानन्दभाष्यम्, वैदिकयन्त्रालयः, अजमेरः, वि० 2020
6. सायणभाष्यम्, वैदिकसंशोधनमण्डलम्, पुण्यपत्तनम्, सन् 1941
7. स्कन्दस्वामि-उद्गीथ-वेंकटमाधव, मुद्गलभाष्यम्, वि० शो० सं०, वि० 2023
8. श्रीपाददामोदरसातवलेकरभाष्यम्, स्वाध्यायमण्डलम्, पारडी, सन् 1967
9. जयदेवशर्मविद्यालंकारभाष्यम्, आर्यसाहित्यमण्डलम्, अजमेरः, वि० 2016

**कपिष्ठलकठसंहिता**

10. सं० रघुवीर, लाहौर, 1932

**काठकसंहिता**

11. सं० श्रीपाददामोदरसातवलेकर, स्वाध्यायमण्डल, औन्ध, 1998

**काण्वसंहिता**

12. ,, ,,
13. सायणभाष्यम्, माधवशास्त्री, चौ० सं० सी०, वाराणसी, 1915

**तैत्तिरीयसंहिता**

14. सं० अनन्तशास्त्री, स्वाध्यायमण्डलम्, वि० 2013
15. भट्टभास्करसायणयोर्भाष्यम्, वै० सं० म०, पुण्यपत्तनम्, सन् 1972

मैत्रायणीसंहिता 16. सं० श्रीपाददामोदरसातवलेकर, स्वाध्याय-मण्डलम्, औन्ध, 1964

यजुर्वेदसंहिता 17. स्वामिदयानन्दभाष्यम्, वैदिकयन्त्रालय: अजमेर:, वि० 2029

18. उवट-महीधरभाष्यम्, मोतीलाल बनारसीदास, सन् 1971

19. जयदेवशर्मविद्यालंकारभाष्यम्, आ०, सा० म०, अजमेर:, वि० 2019

20. स्वाध्यायमण्डलम्, औन्ध 1940

सामवेदसंहिता 21. सायणभाष्यम्, जीवानन्दविद्यासागर:, कलकत्ता, 1892

22. स्वामितुलसीरामभाष्यम्

23. जयदेवशर्मविद्यालंकारभाष्यम्, आ० सा० म०, अजमेर:, वि० 2021

24. स्वामिब्रह्ममुनिभाष्यम्, गुरुकुल कांगड़ी, हरिद्वार, सन् 1972

25. विश्वनाथविद्यामार्तण्डभाष्यम्, जन–ज्ञान प्रकाशन, नई दिल्ली, सं० 2033

ब्राह्मणानि

ऐतरेयब्राह्मणम् 1. सायणभाष्यम्, काशीनाथशास्त्री, आनन्दाश्रम:, पूना, 1931

2. गंगाप्रसाद उपाध्याय: एम० ए०, हि० सा० स०, प्रयाग:, सं० 2006

कौषीतकिब्राह्मणम् 3. गुलाबराय वजेशंकर, आनन्दाश्रम:, पूना, 1911

गोपथब्राह्मणम् 4. सं० राजेन्द्रलाल मित्र, इंडोलोजिकल बुक हाउस, दिल्ली, 1972

ताण्ड्यमहाब्राह्मणम् 5. सायणभाष्यम्, चौ० सं० सी०, बनारस, सं० 1991

तैत्तिरीयब्राह्मणम् 6. सायणभाष्यम्, कलकत्ता, 1862

मन्त्रब्राह्मणम् (छान्दोग्य) 7. दुर्गमोहनभट्टाचार्य:, कलकत्ता, 1958

माध्यदिनशतपथब्राह्मणम् 8. हरिस्वामि-सायणभाष्यम्, लक्ष्मीवेंकटेश्वरप्रेस, बम्बई, वि० 1997
9. गंगाप्रसादउपाध्याय हिन्दीभाष्य, प्राचीन-वैज्ञानिकाध्ययन-अनुसन्धान-संस्थानम्, नई दिल्ली, सन् 1967

आरण्यकानि
ऐतरेयारण्यकम् 1. सायणभाष्यम्, आनन्दाश्रमः, पुण्यपत्तनम्, 1959
तैत्तिरीयारण्यकम् 2. सायणभाष्यम्, आनन्दाश्रमः, पुण्यपत्तनम्, 1967

उपनिषदः
अष्टादश उपनिषदः 1. वैदिकसंशोधनमण्डलम्, पुण्यपत्तनम्, 1958
उपनिषत्संग्रहः 2. मोतीलाल बनारसीदास, नई दिल्ली
एकादशोपनिषद् 3. सत्यव्रत सिद्धान्तालंकार, देहरादून
दशोपनिषदः 4. आनन्दगिरि-शांकरभाष्योपेताः, आनन्दाश्रमग्रन्थावलिः

गृह्यसूत्राणि
आग्निवेश्यगृह्यसूत्रम् 1. सं० रविवर्मन्, त्रिवेन्द्रम्, 1940
आपस्तम्बगृह्यसूत्रम् 2. हरदत्तटीकोपेतम्, सं० चिन्नस्वामी शास्त्री, चौ० सं० सी०, 1971
आश्वलायनगृह्यसूत्रम् 3. गार्ग्यनारायणीयवृत्तिसहितम्, जीवानन्द-विद्यासागर, कलकत्ता, 1893
काठकगृह्यसूत्रम् 4. लाहौर, 1925
कौषीतकिगृह्यसूत्रम् 5. सं० टी० आर० चिंतामणि, मद्रास, 1944
6. सं० रत्नगोपालभट्ट, बनारस संस्कृत सीरिज
खादिरगृह्यसूत्रम् 7. रुद्रस्कन्दवृत्तिसहितम्, मुजफ्फरपुर, 1934
गृह्यसूत्रसंग्रहः 8. श्रीरामशर्मा आचार्य, संस्कृतिप्रकाशन, बरेली 1972
गोभिलगृह्यसूत्रम् 9. मुकुन्दझा टीकासहितम्, मुजफ्फरपुर, 1936
जैमिनीयगृह्यसूत्रम् 10. लाहौर, 1922
द्राह्यायणगृह्यसूत्रम् 11. रुद्रस्कन्दवृत्तिसहितम्, मुजफ्फरपुर, 1934
पारस्करगृह्यसूत्रम् 12. सं० गुजराती प्रिंटिंग प्रेस, बम्बई, 1970

| | |
|---|---|
| | 13. हरिदत्तशास्त्री, भारतीयविद्याप्रकाशनम्, वाराणसी, 1973 |
| | 14. सं० शामशास्त्री, मैसूर 1920 |
| भारद्वाजगृह्यसूत्रम् | 15. |
| मानवगृह्यसूत्रम् | 16. अष्टावक्रटीका, सं० राजकृष्णहंस, बडौदा:, 1926 |
| वाराहगृह्यसूत्रम् | 17. मुजफ्फरपुर, 1934 |
| वैखानसगृह्यसूत्रम् | 18. कलकत्ता, 1927 |
| लोगाक्षीगृह्यसूत्रम् | 19. देवपालभाष्यसहितम्, काश्मीरसीरिज, 1934 |
| शांखायनगृह्यसूत्रम् | 20. ओल्डनवर्ग, ऑक्सफोर्ड, 1886 |
| हिरण्यकेशिगृह्यसूत्रम् | 21. सं० जे० क्रिस्ते, विएना, 1889 |

**धर्मसूत्राणि**

| | |
|---|---|
| आपस्तम्बधर्मसूत्रम् | 1. हरदत्तमिश्र, चौ० सं० सी० वाराणसी |
| गौतमधर्मसूत्रम् | 2. उमेशचन्द्र पाण्डेय, चौ० सं० सी० वाराणसी |
| बौधायनधर्मसूत्रम् | 3. चिन्नस्वामीशास्त्री, चौं०सं०सी०, वाराणसी |
| वसिष्ठधर्मसूत्रम् | 4. बम्बई संस्कृत सीरिज, पूना |
| विष्णुधर्मसूत्रम् | 5. जे० जोली, कलकत्ता, 1881 |

**स्मृतयः**

| | |
|---|---|
| मनुस्मृतिः | 1. कुल्लूकटीकासहिता |
| | 2. मेधातिथिभाष्यसहिता |
| याज्ञवल्क्यस्मृतिः | 3. विज्ञानेश्वरटीकासहिता |
| स्मृतीनां समुच्चयः | 4. आनन्दाश्रम संस्कृत ग्रन्थावलिः |

**अनुक्रमणिकाः कोशाश्च**

| | |
|---|---|
| अथर्ववेद ऋषिदेवता-छन्दोऽनुक्रमणिका | 1. विश्वबन्धु वि० वे० शो० सं०, होशियारपुर |
| अमरकोशः | 2. भार्गव भूषण प्रेस, वाराणसी, 1972 |
| उपनिषद्वाक्यमहाकोशः | 3. कर्नल जी० ए० जेकब |
| ऋक्सर्वानुक्रमणी | 4. कात्यायनकृत, ए० ए० मैकडानल, ऑक्सफोर्ड, 1886 |
| चतुर्वेदव्याकरणपदसूची | 5. विश्वबन्धु, वि०वै०शो० सं०, होशियारपुरम् |
| बृहद्देवता | 6. मैकडानल, मोतीलाल बनारसीदास |




मेदिनीकोशः 7. चौ० सं० सी०, वाराणसी, 1968
वैदिककोशः 8. राजवीरशास्त्री, आर्ष सा० प्र० ट्र०, वि० 2033
वैदिककोशः 9. हंसराज, लाहौर, 1926
वैदिककोशः 10. सूर्यकान्त, बनारस हिन्दू यूनिवर्सिटी, 1963
वैदिकपदानुक्रमकोशः 11. विश्वबन्धु, वि० वै० शो० सं०, होशियारपुर
शब्दकल्पद्रुमः 12. मोतीलाल बनारसीदास, सन् 1961
हलायुकोशः 13. हिन्दीसमितिः, लखनऊ, 1967

अन्ये ग्रन्थाः

ऋग्वेदादिभाष्यभूमिका 1. स्वामी दयानन्द सरस्वती, वैदिक यन्त्रालय अजमेर
2. स्वामी दयानन्द सरस्वती, रामलाल कपूर ट्रस्ट, सोनीपत
ऋग्वेदकाल में पारिवारिक सम्बन्ध 3. शिवराज शास्त्री
ऋषि दयानन्द के ग्रंथों का इतिहास 4. युधिष्ठिर मीमांसक
ऋषि दयानन्द के पत्र और विज्ञापन 5. रामलाल कपूर ट्रस्ट, सोनीपत
कृत्यकल्पतरु 6. श्री लक्ष्मीधर
गृह्यमन्त्र और उनका विनियोग 7. डा० कृष्णलाल
गृह्यसूत्रसंग्रह 8. श्रीराम शर्मा
चरकसंहिता 9. कलकत्ता 1849
दयानन्दीय लघुग्रन्थ संग्रह 10. रामलाल कपूर ट्रस्ट, सोनीपत
पञ्च महायज्ञ विधि 11. स्वामी दयानन्द सरस्वती
पञ्चरत्नविवाहपद्धतिः 12. फलाहारी शर्मा
पूना प्रवचन 13. स्वामी दयानन्द सरस्वती
भावप्रकाश निघण्टुः 14. चौ० सं० सी, वाराणसी, 1940
भारतीय विवाह 15. गोपालचन्द्र मिश्र

| | |
|---|---|
| महाभारतम् | 16. पूनासंस्करणम् |
| वाल्मीकि रामायणम् | 17. वटोदरासंस्करणम् |
| विवाहपद्धतिः | 18. पं० रामस्वरूपशर्मा |
| वैदिक गृहस्थाश्रम | 19. विश्वनाथ विद्यालंकार |
| वैदिक सूक्तियां | 20. रामनाथ वेदालंकार |
| षोडश संस्कार विधिः सनातन | 21. टीकासहित |
| सत्यार्थप्रकाश | 22. स्वामी दयानन्द सरस्वती, सं० स्वामी वेदानन्द, संन्यास आश्रम, गाजियाबाद |
| | 23. रामलाल कपूर ट्रस्ट, सोनीपत |
| | 24. वैदिक यन्त्रालय, अजमेर |
| सनातन संस्कारविधि | 25. सं० श्रीकण्ठ उपाध्याय |
| स्वामी दयानन्द के ग्रन्थों का इतिहास | 26. युधिष्ठिर मीमांसक |
| संस्कारविधिः | 27. स्वामी दयानन्द सरस्वती, रामलाल कपूर ट्रस्ट, सोनीपत |
| | 28. वैदिक यन्त्रालय, अजमेर |
| संस्कारदीपकः | 29. नित्यानन्दपन्त पर्वतीय |
| संस्कारसमुच्चय | 30. मदनमोहन विद्यासागर |
| संस्कार रत्नमाला | 31. गोपीनाथ भट्ट |
| संस्कार चन्द्रिका | 32. आत्माराम अमृतसरी, भीमसेन शर्मा, हरिदत्त शास्त्री |
| संस्कार चन्द्रिका | 33. सत्यव्रत सिद्धांतालंकार |
| सुश्रुत | 34. निर्णय सागर प्रेस, बम्बई, 1945 |
| स्त्रियों का वेदाध्ययन और वैदिक कर्मकाण्ड में अधिकार | 35. धर्मदेव विद्यावाचस्पति |
| हिन्दू संस्कार | 36. राजवली पाण्डेय |
| हिन्दू परिवार मीमांसा | 37. हरिदत्त वेदालंकार |
| हिन्दू विवाह का संक्षिप्त इतिहास | 38. हरिदत्त वेदालंकार |



पंजाब विश्वविद्यालय की पी.एच.डी. उपाधि के लिए श्री विक्रम कुमार द्वारा प्रस्तुत "महर्षिदयानन्दकृत-संस्कारविधौ विवाहगृहाश्रमप्रकरणयोरध्ययनम्" शीर्षक शोध प्रबन्ध की मैंने परीक्षा की । यह प्रबन्ध महर्षि दयानन्द कृत संस्कार विधि के विवाह और गृहस्थाश्रम प्रकरणों के सूक्ष्म अध्ययन एवं गहन चिन्तन का परिणाम है । इस प्रबन्ध में लेखक ने गृहस्थाश्रम के महत्त्व का प्रतिपादन करते हुये इसके कर्तव्यों एवं दायित्वों का उल्लेख किया है । महर्षि दयानन्द के गृहस्थाश्रम विषयक विचारों के समाज पर पड़ने वाले प्रभावों की भी इसमें समीक्षा की गई है । लेखक ने महर्षि दयानन्द द्वारा प्रतिपादित विवाह पध्दति का अन्य विवाह पध्दतियों से भेद दिखलाते हुये इसके वैशिष्ट्य को सुचारु से प्रदर्शित किया है । विवाह संस्कार के विविध विधि विधानों के महत्त्व को प्रदर्शित करने का सफल प्रयत्न किया है । अपने शोध प्रबन्ध में लेखक ने स्थान-स्थान पर अपनी मौलिक चिन्तन शक्ति का परिचय दिया है । शोध प्रबन्ध की भाषा सरल तथा प्रवाहपूर्ण है तथा शैली सरस एवं हृदयाकर्षक है ।

प्रो० सत्यदेव वेदालंकार

# वैदिकप्रमाणानामालोके स्वामिदयानन्दप्रतिपादितविवाह-संस्कारगृहाश्रमप्रकरणानुशीलनम् ।